# पारिभाषिकपदार्थसंग्रहः॥

ग्रन्थकारः
कुरुगण्टि श्रीरामशास्त्री।

श्रीहरिहरगणपतिमेधादाक्षिणामूर्तिदेवताभ्योनमः ।

# पारिभाषिकपदार्थसंग्रहः॥

तर्कसङ्ग्रहसर्वस्वान्तर्गतः ।

न्यायशास्त्रव्युत्पित्सूनामत्यन्तोपकारकः ।

विचित्रतमविविधतर्कशास्त्रीयविषयजातविभूषितः ।

"न्यायवेदान्ततन्त्रप्रवीण"
वेमूरि रामब्रह्मशास्त्रिमहोदयाना
मन्तेवासिना
कुरुगण्टि सूर्यनारायणशास्त्रिद्वितीयतनयेन
तर्कसङ्ग्रहसर्वस्व, दीपिकासर्वस्व, पञ्चलक्षणीसर्वस्वकृता
सम्प्रति द्वादशवत्सरेभ्यः बृन्दावनपुरीविराजमान
हिन्दूकलाशालायां
संस्कृतोपाध्यायपदवीमधितिष्ठता
ततःपूर्वं द्वादशवत्सरान्
तेनालिनगरविराजमानसंस्कृतकलाशालायां
तर्कालङ्कारशास्त्राध्यापकपदमलंकृतवता

वेमूरुग्रामवास्तव्येन
कु रु ग ण्टि श्री रा म शा स्त्रि णा
प्रणीतः

P·T·O·

न्यायवेदान्तविद्यापारीणैः श्री॥ वे॥ बुलुसु अप्पन्नशास्त्रिमहोदयैः
गोदावरीमण्डलान्तर्गत भट्नविल्लिग्रामसंस्थापिते
श्रीशारदानाम्नि तदीये मुद्रणालये
मुद्रापितस्सन् विजयतेतमाम् ॥

केवलस्यास्य मूल्यम् (१—४—०) सपादमेकं रूप्यकम्

तर्कसङ्ग्रहव्याख्यारूपतर्कसङ्ग्रहसर्वस्वसमन्वितस्यास्य
मूल्यम ( रू २—४—० ) सपादं रूप्यकद्वयम् ॥

अनेन विना पृथक् मुद्रापितस्य
तर्कसङ्ग्रहव्याख्यात्मकस्य केवलस्य तर्कसङ्ग्रहसर्वस्वस्य
मूल्यम ( रू १—४—० ) सपादमेकं रूप्यम्

प्रापणव्ययः (वी॰ पी॰, व्ययः)
सर्वग्रन्थानां प्रत्येकमेव ॥

असमदीयग्रन्थानां विक्रये पारितोषिक (कमीषन्) दानपद्धतिर्नास्ति

कलिगताब्दाः ५०४० - क्री॥ सं॥ १९४०.
विक्रमनाम्नि वत्सरे
समापितमासीदस्य द्वितीयं मुद्रणम् ।





# विषयानुक्रमणिका.

# उपोद्घातः



आर्याः! विश्वेषां विदुषां विदितचरस्यापि विषयस्यास्य विज्ञापनकर्मणि समुत्सहते मे मानसम्, सहृदयास्सुधियएव मद्वचसां पक्षपातराहित्ये साक्षीभविष्यन्तीति सुदृढं प्रत्येमि, न शोभन्ते हि न्यायविज्ञानविकलाः पण्डितप्रकाण्डाः शास्त्रान्तरप्रवीणाअपि, प्रत्युत परिभूयन्तेच दर्शनान्तरनिष्णाताअपि विचित्रतमप्रतारणासरणिसम्पादके शस्त्रेऽस्मिन् कुशलैरकुशलैरपि तत्र कृतपरिचयैस्सामान्यैश्च प्रदर्शिताभिः न्याय्याभिराभासरूपाभिश्च उपपत्तिभिः पिहितमुखाः, अत आसीच्छोचनीया दशा न्यायेऽकृतमतीनां शास्त्रान्तराधिकृतानां कृतिनामपि। अतएव जागर्तीदमाभाणकम् "प्रायेण वैयाकरणाः पिशाचाः, प्रयोगमन्त्रैर्विनिवारणीयाः, उत्प्लुत्य पञ्चास्यवदाप्लुवन्तः कथं नु वार्या इह गौतमीयाः" इति। निरर्गलाहि प्रवृत्तिरासीत् नैयायिकव्यपदेशभाजां परमुखपिधाने, मृगेन्द्रमुखसमीक्षणेन मत्तमातङ्गाइव वक्रतमयुक्तिवादशालिनां तार्किकाणां सन्दर्शनेनैव भीतभीताश्चरन्ति प्रायेण शास्त्रिणोन्ये, किमर्थेयं शोच्या दशा समर्थानामपीति खिद्यते नितरां मे मानसम्॥

दर्शनै रपरैरधीतैरनधीतैर्वा नास्य उपकारगन्धो मनागपि विद्यते, एकेनामुना विज्ञातेन तु सर्वमन्यत्तन्त्रजातं सुविज्ञातमिव भवति, अतएव तत्तत्सम्प्रदायमात्रपरिज्ञानसहायाएव शास्त्रान्तराण्यात्मसात्कुर्वते नैके नैयायिककेसरिण इति विजानन्त्येव बहवः, सुदूरापास्ताहि परेषां तादृशी शक्तिः, तत्तादृशोहि महिमास्य न्यायशास्त्रस्य न्यायसाध्यमन्वयबोधप्रकारमनुमानरचनाविधांच तल्लभ्यामजानन्तः किं जानीयुरपरे तद्बहुलानि पूर्वोत्तरमीमांसालङ्कारादीनि शास्त्रान्तराणि, येच कुशाग्रसदृशप्रज्ञमात्मानमाकलयन्तो विनापि

न्यायविज्ञानमन्यत्र कोलाहलंकर्तुमुत्सहन्ते ते परं साहसिकाः केवल-मित्येव शक्या वक्तुं, यत्रच अप्रतिहतमतयोपि प्रतिहन्यन्ते तत्र किं करिष्यत्यमीषामहंकृतिः केवला । वर्जयित्वा पाणिनीयमेकं अ-धीतेनामुना सुगमो भवतिहि शास्त्रान्तरीयो विषयः, तत्रापि हि-त्वा प्रक्रियाभागमुत्तरोत्तरग्रन्थेषु निर्दिष्टश्शास्त्रार्थस्सकलः करतलाम-लकायतेहि तार्किकाणामत्यत्र नास्ति विशयलेशः, प्रक्रियाप्यनेनो पक्रियमाणा चेत् विमलतमतले दर्पणे स्वाकृतिरिव प्रकाशतेहि मानसादर्शेषु । शाब्दिकाः कतिपये "शब्दएव सर्वेषां मूल" मिति म-न्यमानाश्शब्दशास्त्रमेव सर्वेषां प्रधानमित्याचक्षते, न तत्रास्ति विप्र-तिपत्तिरस्माकं, यतो वर्वर्ति सूक्तिः "काणादं पाणिनीयञ्च सर्वशा-स्त्रोपकारक"मिति, अपितु प्रतिभात्यनयोरियान् भेदः, अधीतकाव्य नाटकादयस्सुधियो विनापि यथावत्पाणिनीयपठनं कोशादिसहकृते-न प्रयोगपरिचयबलेनापि केवलेन साधु संगृह्य शब्दजालमावश्यकं क्षमन्ते तन्त्रान्तराण्यप्यात्मनो वशे कर्तुं, तेषां सूत्रमुखेन शब्दरूप निष्पत्तिप्रक्रियामवगन्तुमक्षमाणामपि नास्ति हानि विशेषतः; विना परिचयं न्यायस्य तन्त्रान्तरेषु द्रढीयान् प्रवेशस्तु दुष्प्रापइति । वस्तुतस्तर्कशास्त्रमिदं यत्नेन महता साधितमपि नतु चिरमाश्रये लभते पदं, यतश्चेदमनवासदृढतमप्रवेशैर्विस्मर्येत कालेनाल्पीयसैव, अतएव "क्षणादूर्ध्वमतार्किका" इत्युक्तिस्संगच्छते । किञ्च शास्त्रमि-दं न केवलं शास्त्रमित्येव व्यवहर्तुमर्हं, अपितु तर्कभाषेत्याख्यामपि लब्धुमर्हति, यतः प्रपञ्चे तत्तद्देशभाषाणामिव शास्त्रप्रपंचेच शास्त्र मिदं समन्ततो भाषेव निरर्गलप्रचारस्य लभतेऽवकाशम्, सर्वाणि-खलु दर्शनानि शक्यन्तेखलु भाषयाऽनया न्यायशास्त्रमयानीव कर्तुं, अप्रमाहि केवलमान्वीक्षकीपरिज्ञानमन्तरापि शास्त्रान्तरेषु द्रढीयान् प्र-वेशस्सम्पादयितुं शक्यतइति । किञ्च अद्यतनाः पण्डिततल्लजा

येपि वैयाकरणकेसरिण इति मीमांसकमतज्ञा इति आलङ्कारिका ग्रेसरा इति अप्रतिमप्रतिभाप्रकर्षा इतिच प्राप्नुवन्ति महतीं ख्याति सर्वे ते कृतमतयएव न्यायदर्शने*-- अस्यादृशःखलु महिमाऽस्य । किञ्च शास्त्रमिदं नकेवलं शास्त्रमित्येव वक्तुं शक्यम्, अपितु शस्त्रमस्त्रंच भवति प्रतिपक्षपराजयप्रापणकर्मणि, असिधारा इव निस्सरन्ति खलु प्रतिवादिनां भयमादधाना मुखादमीषामविच्छिन्ना वाग्धाराः, एषां वाग्धाटीच विचित्रतमाह्यश्वधाटीव, युध्यन्तेस्त्रलक्ष्मी परिष्कारायुधैरायतैर्दण्डायमानैः प्रचण्डस्वभावाः, हृद्यः खलु शास्त्रार्थोप्यस्मिन्नुक्तिप्रत्युक्तिरूपः युक्तिप्रतियुक्तिस्वभावः अविच्छिन्नावच्छेदावच्छेदकादिविचित्रपदपंक्तिजटिलः, शास्त्राणामलङ्करणंहि तर्कशास्त्रंनाम, अनवद्या हृद्या अप्यन्याश्च विद्या आभरणमिदमन्तरा भूषणविधुरसुन्दरीकल्पा विराजन्ते, अतो नावभासेरन् न्यायविज्ञानविकला नैकतन्त्रस्वतन्त्रा अपीति निश्चप्रचमिदम् ।

किञ्च मया चिरादवलोक्यन्ते अधीतन्यायतन्त्रा अनेके अतिक्रान्ते च कस्मिंश्चित्काले नैव पृथिवीलक्षणमपि साकल्येन प्रभवन्ति वक्तुम्, यतश्च रीतिस्तस्या अन्यादृशी, कथं लब्धुं शक्यते "गन्धवती पृथिवी" त्यादिलक्षणवाक्यात्तावान् लक्षणपरिष्कारप्रकारः समुचितविवरणमन्तरा अनायासेन अमन्दबुद्धिभिरपि विद्यार्थिभिः ।

इदंहि महन्निदर्शनं न्यायस्य कर्कशतमत्वे, यत् शास्त्रांतरेषु श्रुतपाण्डित्यबलेन ये केपि यान् कांश्चित्प्रश्नानीशते कर्तुम्, अत्र तु अधीतादेव दुर्लभे पाण्डित्ये नास्ति; ह्यवकाशश्श्रुतपाण्डित्यकथायाः — प्रश्नावकाशस्तु शशविषाणप्रायएवेति—

यत्रच न संति नैयायिकाः तत्राहि पदं लभन्ते येनकेनापि नाम्ना पण्डिता अन्ये, अपितु तर्कशास्त्रमिदमयःपिण्डवदतिकर्क,

शमासीत्, नतु मृत्पिण्डवदक्लेशेन भेत्तुं शक्यम्, यस्यच सं. साधने निराशा भवन्ति कुशाग्रमतयोपि, अतः अयस्सम्मितमिदं विधाय चूर्णप्रायं श्रद्धालूनां व्युत्पित्सूनां सर्वेषां मतिमतां ग्रहणा र्हं चिकीर्षुरहमतिकठिनांश्च विषयानकठिनान् सुग्रहान् विधाय स. ज्जनानां कृपामाशिषश्च मयि सम्पादयितुं विनियुज्य यावच्छक्ति मम. बुद्धिबलं अन्यादृशी प्रक्रियेयमवलम्बिता लोकोपकाराय। कैश्चि दहमादौ मध्ये तथान्तेच विविधैर्वक्रैर्वचनैः ग्रन्थरचनायामस्यां नि रुत्साहः कृतोऽपि भगवत्प्रसादप्रेरितोहं सहृदयानां महापण्डितानां सुवचनान्येव प्रमाणीकुर्वन् "किमेतैर्वराकैरसूयापरवशैरश्लीलवचनैर्दु. श्शीलै"रिति पर्यालोच्य अपनीतविक्रियः (१) तर्कसङ्ग्रहसर्वस्वम्, (२) दीपिकासर्वस्वम्, (३) पंचलक्षणीसर्वस्वम् त्रितयमेतत्प्रणीय पारिभाषिकपदार्थसङ्ग्रहस्यास्य द्वितीयस्मिन्नपि मुद्रणे कृतादरोस्मि; अत्र च अधीतिनामध्यापकानांच अधिकारितारतम्येनोपयोगाय प्राये. णातिसुलभाः क्वचिन्नातिसुलभाश्च विषयान्यरूप्यंत टिप्पण्यां पारि भाषिकपदार्थसंग्रहेच, यावदवकाशं सुलभीकृतवानस्मि सर्वस्वत्रितये विषयजातम्। पारिभाषिकपदार्थसंग्रहेतु कृत्स्नशास्त्राध्ययनेनापि सा. मान्यैर्दुर्ग्रहा विविधा विषया निरूपिताः। किमुक्तेन बहुना, ग्रंथा इमे स्वस्वभावं स्वयमेव प्रकाशयिष्यंति।

किंबहुना! सामान्यव्युत्पत्तिर्वा न्याये सम्पादनीया, अधीता. श्चे च्छ्रद्धापुरस्सरमस्मदीया ग्रंथाः नियतं न्यायशास्त्रे निर्विचिकि त्समुत्पद्येत व्युत्पत्तिरिति विश्वासिमि।

अर्याः! अस्मद्ग्रंथेषु ये केपि विषया आज्ञानिकाः प्रामा दिकावा अवलोक्येरन् तर्हि "गच्छतस्खलनमविरुद्ध"मिति मनसि कुर्वंतः कृतादराः कृतार्थयंतु मामिति प्रार्थये नितरामवनतशिराः। कृतमितःपरं विस्तरेणेति विरमामि विशेषतो लेखनतः।

अयि न्यायविद्यार्थिन:!— किमनया केवलया तर्कविद्यया स. मार्जितयापि, मतिं कुरुत पाणिनीयेपि यथावकाशम् । यतश्च तत्प्रसादेन मृदुमधुराणि सुप्तिङन्तगर्भाणि वाक्यानि प्रयोक्तुं प्रभविष्यथ— किञ्च सुखमामुष्मिकमपि प्राप्तुमलं भविष्यथ— यतोहि जागर्ति वैयाकरणमतसर्वस्वं वचनरत्नमिदम् "एकश्शब्दस्सुष्टुप्रयुक्तस्स्वर्गे लोके कामधुग्भवतीति" किञ्च प्रयत्यतां यावच्छक्ति पूर्वोत्तरमीमांसासान्निध्यसम्पादने; यतस्ते कर्मब्रह्मपरे निर्मलं शर्मदं धर्मं जितारिषड्वर्गगम्यमपवर्गंच निरर्गलं क्रमेण प्रापयितुं पारयत: । आमुष्मिकसुखयत्नमंतरा ऐहिके यत्न: केवलं धर्मोहि पामराणां— किंबहुगिरा! समे मत्वाऽऽमुष्मिकमैहिकंच संचरत यथेष्टमाभिमता. सु विद्यासु यतश्च समबुद्धिर्विशिष्यते— समाश्रयत प्रश्रयं श्रमसाध्यमपि— माकुरुत निरंकुशतर्कवासनया निजमात्मानमालयमवलेपस्य— मानिंदत कदापि साधुजनताम्— आनंदयत साधुगुरुजनतामात्मानमपि— तथाऽऽचरतां भवतां भविष्यति स्वश्रेयसं निश्श्रेयसंच नियतम् । एष एव ममोपदेश:— इति शिवम्

इति ग्रंथकार: ॥

म मुखविलास:—

कुरुगण्टि श्रीरामशास्त्री, (तर्कपण्डित:)

* तेनालि,

गुण्टूरुजिला, M, S, M, रैल्वे,

सौत्इण्डिया ॥

कलिगताब्दा: ५०४० — क्री॥ सं॥ १९४०



इयमेका सूचना–

आर्याः!! इमे मदीयग्रन्थाश्शुभ्रपत्रेषु देवनागर्या लिप्यामुपनिबद्धाः, सरलया शैल्याच समलंकृताः ॥

☞ पारिभाषिकपदार्थसंग्रहः* तर्कसंग्रहव्याख्यां विना पृथङ्मुद्रापितः, न्याय (तर्क) शास्त्रे दृढतमप्रवेशसम्पादकः विचित्रविविधविषयविशेषो विराजते, पञ्चाशदुत्तरशताधिकपृष्ठमुद्रितः केवलस्यास्य मूल्यं रु १–४–० सपादरूप्यकम् ॥ द्वितीयमुद्रणस्यास्य प्रथममुद्रितपारिभाषिकपदार्थसंग्रहदुर्लभेन विषयान्तरेणोपशोभिततया तत्राविद्यमानेन अधिकसंख्याकेन चत्वारिंशत्पुटजातेन समन्विततया पुटाधिक्यग्रन्थपार्थक्यविषयाधिक्यानुरूपं प्रतिमामूल्यमित्थं निर्णीतं; अतो मास्त्वत्र मूल्याधिक्यशङ्का ॥

☞ तर्कसंग्रहसर्वस्वम्* निरुक्तपारिभाषिकपदार्थसंग्रहेण विना (कृतं) मुद्रापितं, अन्नम्भट्टविरचिततर्कसंग्रहव्याख्यानरूपं, स्वकीयाटिप्पणीमूलग्रन्थाभ्यां समलंकृतम्, शाब्दबोधलक्षणतत्समन्वयदलसार्थक्यदोषप्रदर्शनतन्निराकरणादिसम्प्रदायसिद्धपाठपद्धतिप्रतिपादकम्, पञ्चाशदुत्तरशताधिकपृष्ठसमन्वितम् ॥ अस्य मूल्यम्......
रु १–४–० सपादमेकरूप्यं ॥

* एतदेव तर्कसंगृहसर्वस्वं निर्दिष्टपारिभाषिकपदार्थसंगृहेण समं युगपदेव यदि गृह्येत उभयोरनयो मूल्यं......
रु २–४–० सपादं रूप्यकद्वितयम्
पृथग्गृहणे एकैकस्य मूल्यं..... रु १–४–०
सपादमेकरूप्यकमेव ॥

* दीपिकासर्वस्वम्* अन्नम्भट्टविरचिततर्कसंगृहदीपिकाव्याख्यानरूपं, शाब्दबोधलक्षणतत्समन्वयदोषप्रदर्शनतन्निरा.

करणादिप्रतिपादकं पारिभाषिकपदार्थसंगृहान्तरेण सहितम्, निजटिप्पणीमूलगून्थाभ्यां समन्वितम्, पञ्चाशदुत्तरशतत्रया. धिकपृष्ठ [पार्श्वे] समान्वितम्- अस्य मूल्यं रु २.८.० सार्धं रूप्यकद्वितयम् ।

☞ पंचलक्षणीसर्वस्वम्०- मथुरानाथीयपंचलक्षणीव्याख्यानरूपम्, एतदुपयुक्तपारिभाषिकपदार्थसंग्रहस्वीयटिप्पणीमूलग्रन्थैरुपशोभितं, विविधदलसार्थक्यसमन्वितं, विचित्रशास्त्रार्थानुबन्धं, ग्रन्थान्तरदुर्लभसुपर्याप्तपर्याप्तिगर्भनिवेशप्रकारपरिष्कृतं, पञ्चाशदुत्तरशताधिकपुटमुद्रितम् ॥
अस्य मूल्यम् (रु १-४-०) सपादमेकरूप्यकम् ॥

☞ मदीयग्रन्थानां विक्रये पारितोषिक (कमीषन्) दान. पद्धतिः नास्ति- प्रापणव्ययः [वी. पी. व्ययः] प्रत्ये. कमेव ॥

आर्याः! अथोनिर्दिश्यमाना ग्रन्थाः पञ्च इतःपरं प्र. कटीकारिष्यन्ते, यदि भगवान् सर्वप्रकारैरनुगृह्णीयात्.........

१ मुक्तावलीसर्वस्वम् * विश्वनाथपञ्चाननभट्टाचार्यविरचितासि. द्धान्तमुक्तावलीव्याख्यानरूपं ॥

२. सामान्यनिरुक्तिसर्वस्वम् * गदाधरीहेत्वाभाससामान्यनिरु. क्तिव्याख्यानरूपं ॥

३. धर्मनिर्णयसर्वस्वम् ०- धर्मशास्त्रीयविषयप्रतिपादकं ॥

(3)

४. अलङ्कारनिर्णयसर्वस्वम् ०- अलङ्कारशास्त्रीयविषयप्रतिपादकम् ॥

५. मीमांसाविषयसर्वस्वम् ०- पूर्वोत्तरमीमांसाविषयप्रतिपादकम् ॥

इति ग्रन्थकारः ॥

मम मुखविलासः—
कुरुगण्टि श्रीरामशास्त्री, (तर्कपण्डितः)
* तेनालि,
गुण्टूरुजिल्ला, M, S, M, रैल्वे,
सौत्इण्डिया ॥

Address:—
KURUGANTI SREERAMA SASTRY,
(Tarka pandit)
* TENALI (P. o) Guntur District,
Madras presidency,
South India

कलिगताब्दाः ५०४० —— क्री॥ सं॥ १९४०



श्री शिवाय गुरवे नमः ॥

# तर्कसंग्रहसर्वस्वम्.



श्लो॥ श्रीरामशास्त्री कुरुगण्टिवंश्यः
श्रीसूर्यनारायणसूरिसूनुः,
ध्यायाम्यहं श्रीश मिभास्य मीशम्
श्रीदक्षिणामूर्ति मुदारमूर्तिम् ॥

श्रीन्यायाम्बुधिमन्थनोत्थितमहार्घज्ञानधारासुधा
धाराधार मनल्पशिष्यनिकरं श्रीब्रह्मविद्याकरम्,
वेमूर्यन्वयवार्धिशीतलकरं कारुण्यरत्नाकरम्
रामब्रह्मसुधीन्द्रदेशिकवरं शान्ताकृतिं भावये ॥

अन्नम्भट्टबुधप्रोक्तसंग्रहार्थप्रकाशकम्,
तर्कसङ्ग्रहसर्वस्वं कुर्वे बालसुबोधकम् ॥



## —•श्रीपारिभाषिकपदार्थसङ्ग्रहप्रारम्भः•—

### *तत्र पर्यायशब्दाः*

पदार्था अभिधेयाः प्रमेयाः ज्ञेया इत्यादयः पर्यायशब्दाः। द्रव्यं गुणी गुणवान् कर्मवान् क्रियावान् इत्यादयः॥ कर्म क्रिया चलनं स्पन्दनं स्पन्द इत्यादयः। जातिः सामान्यं इत्यादयः॥ प्रध्वंसाभावः ध्वंसः नाशः विनाशः निवृत्तिः इत्यादयः॥ अत्यन्ताभावः रहितत्वं शून्यत्वं इत्यादयः॥ अन्योन्याभावः भेदः भिन्नत्वं अन्यत्वं इतरत्वं भेदवत्त्वं इत्यादयः॥ ज्ञानं बुद्धिः बोधः संवित् धीः ग्रहः प्रत्ययः प्रतीति रित्यादयः। भ्रमः अयथार्थानुभवः अ-

प्रमा इत्यादयः ॥ स्वरूपसम्बन्धः दैशिकविशेषणतासम्बन्ध इत्यादय. । कालिकसम्बन्धः कालिकविशेषणतासम्बन्ध इत्यादयः ॥ दैशिकसम्बन्धः दिक्कृतविशेषणतासम्बन्ध इत्यादयः । कालिकसम्बन्धदैशिकसम्बन्धस्वरूपसम्बन्धद्वयमपि सर्वाधारताप्रयोजकसम्बन्धत्वेन व्यवह्रियते ॥ अनुमानं व्याप्तिज्ञानं इत्यादयः । प्रत्यक्षं प्रत्यक्षप्रमाणं इन्द्रियं इत्यादयः ॥ पदं शब्दः इति । निश्चितहेतुसाध्यवान् दृष्टान्तः अन्वयदृष्टान्तः अयमेवान्वय्युदाहरणमिति चोच्यते अमुमेव साध्यनिश्चयास्पदत्वमात्रमुपादायापि क्वचित्सपक्षत्वेन व्यवहरन्ति ॥ निश्चितसाध्याभावहेत्वभाववान् दृष्टान्तः व्यतिरेकदृष्टान्तः अयमेव व्यतिरेक्युदाहरण मित्युच्यते अस्यैव साध्याभावनिश्चयगोचरत्वमात्रमप्युपादाय क्वादिद्विपक्षत्वव्यवहारः । साधनं साधकं लिङ्गं हेतुः इत्यादयः । आधारत्वं आधारता आश्रयत्वं आश्रयता अधिकरणत्वं अधिकरणता इत्यादयः । आधेयत्वं आधेयता वृत्तिः सत्त्वं इत्यादयः । तत्सत्त्वं तद्वृत्तित्वं तन्निष्ठत्वं तद्गतत्वं तदधिकरणकत्वं तदधिकरणताकत्वं तन्निष्ठाधिकरणतानिरूपकत्वं तदाश्रयकत्वं तदाधारकत्वं इत्यादयः । तद्विषयकत्वं तद्विषयताकत्वं तन्निष्ठविषयतानिरूपकत्वं तद्विषयित्वं तन्निष्ठविषयतानिरूपितविषयित्वं तद्विषयताशालित्वं तदवगाहित्वं तद्गोचरत्वं इत्यादयः । तद्विशेष्यकत्वं तद्विशेष्यताकत्वं तन्निष्ठविशेष्यतानिरूपकत्वं तद्विशेष्यित्वं तन्निष्ठविशेष्यतानिरूपितविशेष्यित्वं तद्विशेष्यताशालित्वं इत्यादयः । तत्प्रकारकत्वं तन्निष्ठप्रकारताकत्वं तन्निष्ठप्रकारतानिरूपकत्वं तत्प्रकारित्वं तन्निष्ठप्रकारतानिरूपितप्रकारित्वं तन्निष्ठप्रकारताशालित्वं इत्यादयः । तत्संसर्गकत्वं तन्निष्ठसंसर्गताकत्वं तन्निष्ठसंसर्गतानिरूपकत्वं तत्संसर्गित्वं तन्निष्ठसंसर्गतानिरूपितसंसर्गित्वं तन्निष्ठसंसर्गताशालि-

त्वं इत्यादयः। तत्प्रतियोगिकत्वं तत्प्रतियोगिताकत्वं तन्निष्ठप्रतियोगितानिरूपकत्वं तदनुयोगिकत्वं तदनुयोगिताकत्वं तन्निष्ठानुयोगितानिरूपकत्वं इति। कार्यत्वं जन्यत्वं हेतुमत्त्वं प्रयोज्यत्वं इति। परंतु व्यवहितकार्ये प्रयोज्यता व्यवहार्या। कारणत्वं जनकत्वं हेतुत्वं प्रयोजकत्व इत्यादयः। परंतु व्यवहितकारणे प्रयोजकता व्यवहार्या। तद्ग्राहकत्वं तत्प्रत्यक्षजनकत्वं तदुपलम्भकत्वं इत्यादयः। तत्प्रत्यक्षत्वं तत्साक्षात्कृतत्व तद्ग्राह्यत्वं तज्जन्यप्रत्यक्षविषयत्वं तदुपलब्धत्वं इत्यादयः। अनुमितत्वं अनुमितिविषयत्वं इत्यादयः। चाक्षुषत्वं चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वं चक्षुर्ग्राह्यत्वं इत्यादयः। श्रावणत्वं श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वं श्रोत्रग्राह्यत्वं इत्यादयः। एवं रासनत्वादिकं ग्राह्यम्। एवं चाक्षुषादिशब्दानां चक्षुरिन्द्रियादिजन्यप्रत्यक्षबोधकत्वमपि बोध्यम्। समवेतत्वं समवायसम्बन्धावच्छिन्नवृत्तित्वं इत्यादयः। ईश्वरीयज्ञानं ईश्वरवृत्तिज्ञान मित्यादयः। प्रकृत्यर्थे प्रकारीभूतधर्मो भावप्रत्ययार्थ इतिन्यायेन तद्वत्त्वं तद्विशिष्टत्वं तद्युक्तत्वंच तदेव; यथा गन्धवत्त्वं गन्धविशिष्टत्वं गन्धयुक्तत्वंच गन्ध एव। सामानाधिकरण्यं ऐकाधिकरण्यं एकाधिकरणवृत्तित्वं समानाधिकरणत्वं चेति। असामानाधिकरण्यं वैयधिकरण्यं विरोधः विरुद्धत्वं एकाधिकरणवृत्तित्वाभावः एकाधिकरणावृत्तित्वं व्यधिकरणत्वं भिन्नाधिकरणकत्वप्रभृतयः। नियतत्वं व्यापकत्वं। घटाभावः घटत्वावच्छिन्नप्रतियोगितानिरूपकाभावः। समवायसम्बन्धेन घटाभावः समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगितानिरूपकाभावः इति। घटसामान्याभावः घटत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगितानिरूपकाभावः इति। घटाधिकरणं घटवत् घटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावत् इति। संयोगसम्बन्धेन घटाधिकरणं

संयोगसम्बन्धेन घटवत् संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावदिति । वाच्यत्वं अभिधेयत्वं चेति । सव्यभिचारः अनैकान्तिकः व्यभिचारीति । कालात्ययापदिष्टः बाधितः इति । आश्रयासिद्धिः पक्षाप्रसिद्धिः इति । तादात्म्यसम्बन्धः अभेदसम्बन्ध. इति । तदवच्छेद्यत्वं तदवच्छिन्नत्वं तन्निष्ठावच्छेदकताकत्वं तन्निष्ठावच्छेदकतानिरूपकत्वं चेति । निरूप्यत्वं निरूपितत्व मिति । अतीन्द्रियत्वं इन्द्रियाग्राह्यत्वं इन्द्रियजन्यप्रत्यक्षाविषयत्व मिति । वारणं निवारण मिति । नाम वस्तुप्रतिपादकशब्द इति । ईश्वरसङ्केतः ईश्वरेच्छा शक्तिः अभिधा इति । लक्षणा शक्यसम्बन्ध इति । इष्टं इच्छाविषयः । द्विष्टं द्वेषविषयः । कार्यकारणभावः जन्यजनकभावः हेतुहेतुमद्भावः साध्यसाधनभावः इति । असद्धेतुः दुष्टहेतुः हेत्वाभासः इति । उपादानं समवायिकारणं इति ॥

घटावच्छिन्नभेदः घटवद्भेदः घटवान्नेति प्रतीतिसिद्धभेदः घटत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदः इति । तुरीयविषयता चतुर्थविषयता चेति । तत्प्रतियोगित्वं तदभावाभावत्व मिति । प्रत्यक्षं अपरोक्षं साक्षात्कारः उपलब्धिः अध्यक्षं उपलम्भः इति । अनुमा अनुमिति रिति । उपमा उपमिति रिति । शाब्दबोधः शाब्दज्ञानं शाब्दबुद्धिः अन्वयबोधः वाक्यार्थबोधः वाक्यार्थज्ञान मित्यादयः । व्यवहारः शब्दप्रयोग इति । स्मृति स्स्मरण मिति । निर्णयः निश्चय इति । प्रत्यक्षः प्रत्यक्षज्ञानविषयः अपरोक्षज्ञानविषयः साक्षात्कृत स्साक्षात्कारविषयः उपलब्धः उपलब्धिविषयइति । अभावीयत्वं अभावनिरूपितत्वं इति । ज्ञानीयत्वं ज्ञाननिरूपित्व मिति । संयोगसम्बन्धेन घटवान्नेति प्रतीतिसिद्धभेदः संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद इति । घटसम्ब-

न्धिघटत्वावच्छिन्नसम्बद्धतानिरूपितसम्बन्धितावदिति । संयोगसम्बन्धेन घटसम्बन्धि संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नसम्बद्धतानिरूपितसम्बन्धितावदिति । संसर्गः सम्बन्ध इति । प्रतिपाद्यः प्रतीतिविषयः गम्य इति । घटासाधारणकारणं घटत्वावच्छिन्नकार्यता निरूपितकारणतावदिति । घटानधिकरणत्वं घटाधिकरणत्वाभावः घटाधिकरणभिन्नत्वमिति । भूतलावृत्तित्वं भूतलनिरूपितवृत्तित्वाभाव इति । व्यतिरेकः अभाव इति । परजातिः व्यापकजातिरिति । सादित्वं कार्यत्वं उत्पत्तिमत्त्वं प्रागभावप्रतियोगित्वमिति । अनादित्वं उत्पत्तिशून्यत्वं प्रागभावाप्रतियोगित्वमिति । सान्तत्वं नाशवत्त्वं ध्वंसवत्त्वं ध्वंसप्रतियोगित्वं नाशप्रतियोगित्वमिति । अनन्तत्वं ध्वंसशून्यत्वं नाशशून्यत्वं ध्वंसाप्रतियोगित्वमिति । नित्यत्वं ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वमिति । साध्यवद्व्यावृत्तः साध्यवदवृत्तिः साध्यवन्निरूपितवृत्तित्वाभाववानिति । कार्यं फलमिति । द्वारं व्यापार इति । फलितं पर्यवसन्नमिति । असाधारणधर्मः लक्षणमिति । खण्डप्रलयः अवान्तरप्रलय इति । पीलवः परमाणव इति । निष्कर्षः परिष्कार इति । परमात्मा ईश्वर इति । रूपं वर्ण इति । मानं परिमाणमिति । सुखं आनन्द इति । इच्छा कामइति । क्रोधः द्वेष इति । कृतिः प्रयत्नः कर्तृत्वमिति । पाकः विजातीयतेजस्संयोग इति । उष्णत्वं उष्णस्पर्श इति । शीतत्वं शीतस्पर्श इति । सहचारग्रहः सामानाधिकरण्यज्ञानमिति । प्रत्यासत्तिः सन्निकर्ष इति । सन्देहः संशयः शङ्का इति ॥



## *द्रव्यभेदेन गुणविभागः*

| अधिकरणद्रव्याणि । | आधेयगुणाः । |
|---|---|
| पृथिवी— | क्रमेण रूपादिद्रवत्वान्ता वेगश्चेति चतुर्दशगुणाः। |
| जलम्— | मध्ये गन्धंविहाय रूपादिद्रवत्वान्ता द्वादश स्नेहवेगौचेति चतुर्दशगुणाः। |
| तेजः— | स्पर्शाद्यपरत्वान्ता अष्टौ रूपवेगद्रवत्वानीत्येकादशगुणाः |
| वायुः— | स्पर्शाद्यपरत्वान्ता अष्टौ वेगश्चेति नवगुणाः। |
| आकाशम्— | सङ्ख्यादिविभागान्तपञ्चकं शब्दश्चेति षड्गुणाः। |
| कालः— | सङ्ख्यादिविभागान्ताः पञ्च गुणाः। |
| दिक्— | सङ्ख्यादिविभागान्ताः पञ्च गुणाः। |
| जीवात्मा— | सङ्ख्यादिपञ्चकं बुद्ध्यादिसंस्कारान्ता नवेति चतुर्दशगुणाः। |
| परमात्मा— | सङ्ख्यादिपञ्चकं ज्ञानेच्छाकृतयश्चेत्यष्टौ गुणाः। |
| मनः— | सङ्ख्याद्यपरत्वान्ताः सप्त वेगश्चेत्यष्टौ गुणाः। |

अमुमेवार्थं बोधयन् श्लोकश्च दृश्यते ॥

श्लो॥ वायोर्नवैकादश तेजसो गुणाः
जलक्षितिप्राणभृतां चतुर्दश।
दिक्कालयोः पञ्च षडेवचाम्बरे
महेश्वरेऽष्टौ मनसः तथैवच ॥ इति॥

गुणसामान्यलक्षणं तु द्रव्यकर्मभिन्नत्वेसति सामान्यवत्त्वं गुणत्वजातिमत्त्वंवा बोध्यम् ॥

## *द्रव्यभेदेन विशेषगुणाविभाग.*

श्लो॥ रूपं गन्धो रसस्स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥ इति॥
एते षोडश विशेषगुणाः ॥

| अधिकरणद्रव्याणि | आधेयविशेषगुणाः । |
|---|---|
| पृथिवी— | रूपरसगन्धस्पर्शाश्चत्वारो विशेषगुणाः । |
| जलम्— | रूपरसस्पर्शस्नेहसांसिद्धिकद्रवत्वानि पञ्च । |
| तेजः— | रूपस्पर्शौ द्वौ । |
| वायुः— | स्पर्श एक एव । |
| आकाशः— | शब्द एक एव । |
| जीवात्मा— | बुद्ध्यदिभावनान्ता नव गुणाः । |
| परमात्मा— | ज्ञानेच्छाकृतित्रयं ईश्वरे नित्यसुखाङ्गीकारे चत्वारोगुणाः। |

कालदिङ्मनस्सु विशेषगुणाः केपि नसन्तीति ज्ञेयम् ।

## *द्रव्यभेदेन सामान्यगुणविभागः*

श्लो॥ सङ्ख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिक स्तथा ।
गुरुत्ववेगौ सामान्यगुणा एतेप्रकीर्तिताः॥ एतेदशसामान्यगुणाः

| अधिकरणद्रव्याणि | आधेयसामान्यगुणाः । |
|---|---|
| पृथिवी— | निरुक्तश्लोकोक्ता दश गुणाः । |
| जलम्— | असांसिद्धिकद्रवत्वंविहाय निरुक्तश्लोकोक्ता नव गुणाः । |
| तेजः— | गुरुत्ववर्जयित्वा निरुक्तश्लोकोक्ता नव गुणाः । |
| वायुः— | गुरुत्वासांसिद्धिकद्रवत्वेविहाय पूर्वोक्ता अष्टौगुणाः । |
| आकाशः— | सङ्ख्यादिविभागान्ताः पञ्च गुणाः । |
| काल.— | सङ्ख्यादिविभागान्ताः पञ्च गुणाः । |

दिक्— सङ्ख्यादिविभागान्ताः पञ्च गुणाः।
आत्मा— सङ्ख्यादिविभागान्ताः पञ्च गुणाः।
मनः— सङ्ख्यादिविभागान्ताः पञ्च वेगश्चेति षड्गुणाः।

*मूर्तवृत्तिगुणनिरूपणम्*

मूर्तगुणाः अमूर्तद्रव्यावृत्तिगुणा इत्यर्थः॥
मूर्तत्वंच क्रियाश्रयत्वं पृथिव्यप्तेजोवायुमनांसि मूर्तद्रव्याणि॥
रूपादिचतुष्टयं परत्वादिपञ्चकं स्थितस्थापकवेगौ चेत्येकादश मूर्तगुणाः॥

*अमूर्तवृत्तिगुणनिरूपणम्*

अमूर्तगुणाः मूर्तावृत्तिगुणा इत्यर्थः॥ तेच शब्दादिभावनान्ता दश गुणाः॥

*उभयवृत्तिगुणनिरूपणम्*

उभयगुणाः मूर्तामूर्तोभयगुणा इत्यर्थः। सङ्ख्यादिविभान्ताः पञ्च गुणाः॥

*द्वीन्द्रियग्राह्यगुणनिरूपणम्*

द्वीन्द्रियग्राह्याः त्वचा चक्षुषाच ग्राह्या इत्यर्थः। गुरुत्वमेकं वर्जयित्वा सङ्ख्यादिस्नेहान्ता नवगुणाः॥

*बाह्यैकैकेन्द्रियग्राह्यगुणनिरूपणम्*

शब्दस्पर्शरूपरसगन्धाः पञ्चगुणा बाह्यैकैकेन्द्रियग्राह्या एव भवन्ति। नतु द्वीन्द्रियग्राह्याः भवन्ति॥

## *अतीन्द्रियगुणनिरूपणम् *

गुरुत्वादृष्टभावना अतीन्द्रियगुणाः अत्र भावनापदं वेगभिन्नसंस्कारपरम् तथाचातीन्द्रियगुणाः पञ्चेति सिद्धम् ।

## *अनेकाश्रितगुणनिरूपणम् *

संयोगविभागौ द्वित्वत्रित्वादिसङ्ख्याः द्विपृथक्त्वत्रिपृथक्त्वादयश्चानेकाश्रितगुणाः ।

## *एकैकद्रव्यवृत्तिगुणनिरूपणम् *

रूपादिचतुष्टयमेकत्वैकपृथक्त्वपरिमाणानि परत्वादिभावनान्ता गुणा एकैकद्रव्यवृत्तयः ।

## *कारणगुणोत्पन्नगुणनिरूपणम् *

अपाकजं रूपादिचतुष्टयं अपाकजं द्रवत्वं स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणस्थितस्थापकसंस्काराः कारणगुणोत्पन्नगुणाः। कारणगुणोत्पन्नत्वञ्च स्वाश्रयसमवायिकारणवृत्तिगुणजन्यगुणत्वं यथाश्रुते बोध्यम् ।

## *अकारणगुणोत्पन्नगुणनिरूपणम् *

शब्दादिभावनान्ता विभुविशेषगुणा अकारणगुणोत्पन्ना गुणाः। अकारणगुणोत्पन्नत्वञ्च यथाश्रुते स्वाश्रयसमवायिकारणवृत्तिगुणजन्यगुणत्वाश्रयत्वसम्बन्धेन स्वविशिष्टान्यत्वम् ॥

## *समवायिकारणनिरूपणम् *

अवयविनंप्रत्यवयवाः स्वसमवेतजन्यगुणं स्वसमवेतक्रियांप्रति च स्वमेव समवायिकारणं अतो जन्यभावमात्रे द्रव्यमेव समवायिकारणं

नान्यदिति सिद्धान्तः मात्रपदेन ध्वंसंप्रति समवाय्यसमवायिकारणे नस्त इति ध्येयम् ॥

***असमवायिकारणनिरूपणम् ***

रूपादिचतुष्टयैकत्वसङ्ख्यापरिमाणैकपृथक्त्वास्थितस्थापकसंस्कारशब्देष्वसमवायिकारणत्वमिष्यते ॥

***निमित्तकारणनिरूपणम् ***

बुद्ध्यादिभावनान्तगुणेषु सामान्यादिचतुष्टये च निमित्तकारणत्वमेव वर्तते नान्यदिति सिद्धान्तः ॥

**—*कारणताद्वयविशिष्टवस्तुनिरूपणम् *—**

उष्णस्पर्शसंयोगविभागगुरुत्वद्रवत्ववेगेषु कर्मणि चासमवायिकारणत्वं निमित्तकारणत्वञ्च वर्तते । कालेश्वरयोः स्वगतसंयोगादिकं प्रति समवायिकारणत्वं कार्यमात्रंप्रति निमित्तकारणत्वञ्च वर्तत इति द्रव्यगुणकर्मसु समवायिकारणत्वं निमित्तकारणत्वञ्च तत्तत्कार्यभेदे न सम्भवति अतः द्रव्यएव समवायिकारणत्वं गुणकर्मणोरेवासमवायिकारणत्वं द्रव्यादिसप्तपदार्थेष्वपि निमित्तकारणत्वं सम्भवतीति बोध्यम् ॥

**—*निरूप्यनिरूपकनिरूपणम् *—**

| निरूपिताः | निरूपकाः |
|---|---|
| प्रतियोगिता | अभावचतुष्टयम् |
| विशेष्यता प्रकारता संसर्गतारूपविषयतात्रयम् | ज्ञानेच्छाकृतिसंस्कारद्वेषाः । पञ्चगुणाः । |

| | | | | |
|---|---|---|---|---|
| अधिकरणता | ... | ... | ... | आधेयता |
| कारणता | ... | ... | ... | कार्यता |
| स्वामिता | ... | ... | ... | स्वता |
| निरूपकता | ... | ... | ... | निरूप्यता |
| व्यापकता | ... | ... | ... | व्याप्यता |

अवच्छेदकता { कार्यता कारणता आधेयता अधिकरणता विशेष्यता प्रकारता संसर्गता विषयता अवच्छेदकता लक्ष्यता लक्षणता प्रतियोगिता अनुयोगिता निरूप्यता निरूपकता स्वता स्वामिता प्रभृतयः ॥

प्रकारताविशेष्यतासंसर्गतानां परस्परं निरूप्यनिरूपकभावो दृश्यते ॥

—•धर्मावच्छिन्नपदार्थनिरूपणम्•—

कार्यता कारणता आधेयता प्रतियोगिता अनुयोगिता लक्ष्यता लक्षणता व्याप्यता व्यापकता निरूप्यता निरूपकता प्रभृतयः घटादिनिष्ठा नियतं घटत्वाद्यवच्छिन्नाएव भवन्ति ॥

परन्तु प्रकारता विशेष्यता संसर्गताविषयता अवच्छेदकताः ज्ञानभेदेन धर्मै रवच्छिन्नाः तदनवच्छिन्नाश्च भवन्ति ॥

—•सम्बन्धावच्छिन्नपदार्थनिरूपणम्•—

प्रकारता प्रतियोगिता कार्यता कारणता आधेयता अवच्छेदकता व्याप्यता व्यापकता लक्षणता प्रभृतयः नियतं सम्बन्धावच्छिन्ना एव भवन्ति ॥

—॰सम्बन्धानवच्छिन्नपदार्थनिरूपणम्॰—

अनुयोगिता अधिकरणता विशेष्यता लक्ष्यता संसर्गताप्रभृतयः नियतं सम्बन्धानवच्छिन्ना एव भवन्ति ।

—॰केवलान्वयिपदार्थनिरूपणम्॰—

स्वरूपसम्बन्धेन सर्वत्र वर्तमानत्वं अत्यन्ताभावाप्रतियोगित्वं वा केवलान्वयित्वम् । वस्तुत्व वाच्यत्व प्रमेयत्व ज्ञेयत्व गगनाभाव कपिसंयोगाभाव व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभाव व्यधिकरण धर्मावच्छिन्नप्रतियोगिताकाभावप्रभृतयः केवलान्वयिपदार्थाः ।

वाच्यत्वमीश्वरेच्छाविषयत्वं इच्छाविषयत्वंवा । प्रमेयत्वमीश्वरीयप्रमाविषयत्वं प्रमाविषयत्वंवा । ज्ञेयत्वमीश्वरीयज्ञानविषयत्वं ज्ञानविषयत्वंवा । व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावः संयोगसम्बन्धेन गुणाभावादिः । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः घटत्वेन पटाभावादि. ॥

—॰व्यतिरेकिपदार्थनिरूपणम्॰—

स्वरूपसम्बन्धेन सर्वत्रावर्तमानत्वमत्यन्ताभावप्रतियोगित्वंवा व्यतिरेकित्वं । तेच केवलान्वयिपदार्थभिन्नाः द्रव्यत्वगुणत्वकर्मत्वघटत्व पटत्वादयः ॥

—॰व्याप्यवृत्तिपदार्थनिरूपणम्॰—

व्याप्यवृत्तित्वञ्च स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं । तेच द्रव्यत्वगुणत्वकर्मत्वाभावत्वघटत्वपटत्वादयः ।

—॰अव्याप्यवृत्तिपदार्थनिरूपणम्॰—

अव्याप्यवृत्तित्वञ्च स्वसमानाधिकरणात्यन्ताभवप्रतियोगित्वं ।

अव्याप्यवृत्तिर्द्विविधः कालिकाव्याप्यवृत्तिः, दैशिकाव्याप्यवृत्तिश्चेति आद्यः विभुभिन्नं द्रव्यं जन्यो गुणः क्रियाच । द्वितीयः कपिसंयोगादिः आदिपदेन विभागो गृह्यते । संयोगसम्बन्धेन द्रव्यमपि दैशिका·व्याप्यवृत्ति कालिकाव्यप्यवृत्ति भवति ॥

नतु कालिकाव्याप्यवृत्ति सर्वं दैशिकाव्याप्यवृत्ति भवति, रूपादौ व्यभिचारात् । संयोगत्वेन संयोगो व्याप्यवृत्तिरिति प्राचीनाः । सोप्यव्याप्यवृत्तिरिति नवीनाशयः ॥ विस्तरस्त्वन्ते निरूपयिष्यते ॥

## —•नित्यपदार्थनिरूपणम्•—

पृथिव्यप्तेजोवायुपरमाणवः आकाशादिपञ्चकं जलादित्रयपरमाणुगतं रूपरसस्पर्शान्यतमं जलपरमाणुगतद्रवत्वस्नेहौ नित्यैकत्वपरिमाणे ईश्वरीयज्ञानेच्छाकृतयः सामान्यविशेषसमवायात्यन्तान्योन्याभावाश्च नित्यपदार्थाः । शब्दबुद्ध्योः द्विक्षणावस्थायित्वं । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति । कर्म सर्वमप्यनित्यमेव ।



—'कार्यभेदेन समवाय्यसमवायिनिमित्तकारणनिरूपणम्'—

कालेश्वरादृष्टादिः कार्यमात्रंप्रति साधारणनिमित्तकारणम् । आत्ममनस्संयोगादिः ज्ञानमात्रंप्रति कारणं भवति ॥

| | समवायिकारणम् | असमवायिकारणम् | निमित्तकारणम् |
|---|---|---|---|
| घटंप्रति | कपालम् | कपालद्वयसंयोगः | दण्डचक्रसीत्रसलिलकुलालादयः |
| पटंप्रति | तन्तवः | तन्तुसंयोगः | तुरीवेमादिकम् |
| अवयविनंप्रति | अवयवाः | अवयवसंयोगः | कालेश्वरादृष्टादयः |
| अवयविरूपंप्रति | अवयवी | अवयवरूपं | कालेश्वरादृष्टादयः |
| पटरूपंप्रति | पटः | तन्तुरूपं | कालेश्वरादृष्टादयः |
| घटरूपंप्रति | घटः | कपालरूपं | कालेश्वरादृष्टादयः |
| पार्थिवद्व्यणुकरूपंप्रति | द्व्यणुकं | परमाणुरूपं | कालेश्वरादृष्टादयः |
| पार्थिवपरमाणुरूपंप्रति | परमाणुः | पाकः | कालेश्वरादृष्टादयः |
| संयोगजशब्दंप्रति | गगनं | भेर्याकाशसंयोगः | भेरीदण्डसंयोगप्रभृतयः |
| विभागजशब्दंप्रति | गगनं | वंशाकाशविभागः | कालेश्वरादृष्टादयः |
| शब्दजशब्दंप्रति | गगनं | पूर्वपूर्वशब्दाः | पवनप्रभृतयः |
| ज्ञानमात्रंप्रति | आत्मा | आत्ममनस्संयोगः | मनः प्रभृतयः |

| | | | |
|---|---|---|---|
| ाद्यपतनंप्रति | फलादिकं | गुरुत्वं | काकागमनवायुप्रभृतयः |
| ुतीयपतनंप्राति | फलादिकं | वेगः | कालेश्वरादृष्टादयः |
| ायपुस्तकसंयोगंप्रति | कायः पुस्तकञ्च | हस्तपुस्तकसंयोगः | कालेश्वरादृष्टादयः |
| ्रियाजन्यसंयोगंप्रति | पुस्तकं | क्रिया | कालेश्वरादृष्टादयः |
| ेभागंप्राति | हस्तपुस्तकादिकं | क्रिया | कालेश्वरादृष्टादयः |
| ठरपाकवादिमतेऽव यविरूपंप्रति | अवयवी | पाकः | कालेश्वरादृष्टादयः |
| वयविगतरूपादि चतुष्टयंप्रति | अवयवी | अवयवनिष्ठरूपादि चतुष्टयं | कालेश्वरादृष्टादयः |
| नित्यैकत्वंप्रति | अनित्यघटादि | अवयवगतैकत्वं | कालेश्वरादृष्टादयः |
| ित्वादिकंप्रति | आश्रयघटादिः | स्वसमानाधिकरण यावदेकत्वानि | अपेक्षाबुद्धिप्रभृतयः |
| वयविपरिमाणंप्रति | अवयवी | अवयवपरिमाणं | कालेश्वरादृष्टादयः |
| यणुकपरिमाणंप्रति | त्र्यणुकं | द्व्यणुकगतत्रित्वं | कालेश्वरादृष्टादयः |
| णुकपरिमाणंप्रति | द्व्यणुकं | परमाणुगताद्वित्वं | कालेश्वरादृष्टादयः |
| ानित्यमवयविगतमेक थक्त्वंप्रति | अवयवी | अवयवगतैकपृथक्त्वं | कालेश्वरादृष्टादयः |
| ्पृथक्त्वंप्रति | आश्रयद्रव्यं | समानाधिकरणं नानापृथक्त्वं | कालेश्वरादृष्टादयः |

कार्यमात्रंप्रति प्रतिबन्धकाभावकार्यप्रागभावप्रभृतयोपि निमित्तकारणानीति ज्ञेयम् ॥

एवंरीत्याऽन्यत्रापि भावकार्यस्थले कारणत्रयं ग्राह्यं अतो ध्वंसंप्रति समवाय्यसमवायिकारणयोरभावेऽपि नक्षतिः ॥

—•फलभेदेन व्यापारकरणनिरूपणम्•—

| फलम् | व्यापारः | करणम् |
| --- | --- | --- |
| प्रत्यक्षज्ञानं | इन्द्रियार्थसन्निकर्षः | षड्विधेन्द्रियाणि |
| चाक्षुषप्रत्यक्षं | चक्षुर्विषयसंयोगः | चक्षुरिन्द्रियं |
| त्वाचप्रत्यक्षं | त्वगिन्द्रियविषयसंयोगः | त्वगिन्द्रियं |
| रासनप्रत्यक्षं | रसनमनस्संयोगः | रसनेन्द्रियं |
| घ्राणजप्रत्यक्षं | घ्राणमनस्संयोगः | घ्राणेन्द्रियं |
| श्रावणप्रत्यक्षं | श्रोत्रमनस्संयोगः | श्रोत्रेन्द्रियं |
| मानसप्रत्यक्षं | आत्ममनस्संयोगः | मनइन्द्रियं |
| अनुमितिः | परामर्शः | व्याप्तिज्ञानं |

| | | |
|---|---|---|
| उपमितिः | अतिदेशवाक्यार्थस्मरणं | अतिदेशवाक्यार्थज्ञानं |
| शाब्दबोधः | पदार्थोपस्थितिः | वृत्तिज्ञानसहकृतं पदज्ञानं |
| घटः | भ्रमणं | दण्डः |
| घटः | कपालद्वयसंयोगः | कपालः |
| पटः | तन्तुसंयोगः | तन्तवः |
| पटः | तुरीवेमातन्तुसंयोगः | तुरीवेमादि |
| कपालः | कापालिकसंयोगः | कापालिकं |
| द्व्यणुकं | परमाणुसंयोगः | परमाणवः |
| समाप्तिः | विघ्नध्वंसः | मङ्गलम् |
| स्वर्गादिकं | अपूर्वं | यागादिकं |
| स्मृतिः | भावनाख्यसंस्कारः | अनुभवः |

एवंरीत्या फलभेदेनान्यत्रापि व्यापारकरणनिर्णयः कार्यः ॥



## *मतभेदेन प्रमाणनिरूपणम् *

प्रत्यक्षमेकं चार्वाकाः। प्रत्यक्षानुमाने द्वे प्रमाणे इतिकाणादाः। प्रत्यक्षानुमानशब्दास्त्रयः प्रमाणानीति साङ्ख्यकापिलाः। प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानीति नैयायिकाः। प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः षट्प्रमाणानीति मीमांसकाः। सम्भवैतिह्याभ्यामष्टाविति पौराणिकाः। सम्भवैतिह्यचेष्टाभिस्समं नव प्रमाणानीति भरतः। शतेपञ्चाशन्न्यायेन पञ्चाशत् ज्ञानजनकं शतज्ञानं सम्भवप्रमाणं। इहवटे यक्षस्तिष्ठतीत्यज्ञातमूलवक्तृकः प्रवादः ऐतिह्यप्रमाणम्। गमनागमनादिज्ञानजनिकाः करचरणनयनादिचेष्टाश्चेष्टाप्रमाणम्।

## *अस्मिन्मते प्रमाणचतुष्टयावश्यकतानिरूपणम् *

प्रत्यक्षप्रमाणमात्रादरेऽतीन्द्रियाणामीश्वरादीनां सिद्धिर्नसम्भवति अतोऽनुमानाङ्गीकरणम्। प्रत्यक्षानुमानरूपप्रमाणद्वयमात्रादरे विप्रकृष्टदेशकालस्थानां लोकान्तराणां लोकान्तरीयाणामहेतुगम्यानां पदार्थानां सिद्धिर्नसम्भवति अतः तद्ग्राहकं शब्दप्रमाणमप्यावश्यकं, एतत्प्रमाणत्रयादरेऽपि गवये गोसादृश्यज्ञानस्यानुपपन्नतया चतुर्थमप्युपमानं प्रमाणमङ्गीकार्यम्॥

## *व्याप्यव्यापकनिरूपणम् *

यच्छब्दाभिलप्यो व्याप्यः तच्छब्दाभिलप्यो व्यापकइति निर्णयः कार्यः यथा यत्रधूमस्तत्राग्निः योयो धूमवान्सोऽग्निमानित्यादिस्थलेषु यच्छब्दाभिलप्यधूमो व्याप्यः तच्छब्दाभिलप्याग्निर्व्यापकश्च भवति एवमेव यत्र वह्न्यभावस्तत्रधूमाभाव इत्यादिष्वपि वह्न्यभावस्य व्याप्यत्वं धूमाभावस्य व्यापकत्वं ग्राह्यम्॥

*पक्षसाध्यहेतुनिरूपणम् *

यस्मिन् धर्मिणि साधनेन साध्यं साध्यते स पक्षः। यथा पर्वतो वह्निमान्धूमादित्यत्र धूमेन वह्नेः पर्वते साधनीयतया स पर्वतः पक्षः। यदनुमीयते साधनेन तत्साध्यं अतः वह्निस्साध्यं पञ्चम्यन्तप्रतिपाद्यो हेतुः अत्र धूमो हेतुः ॥

*प्रकारविशेष्यनिरूपणम् *

इदमादिसर्वनामपदाभिलापस्थले इदमादिपदार्थो विशेष्यं भवति। यथा अयं पुरुषः, एष स्थाणुः, असौ राजा इत्यादाविदंपदार्थैतत्पदार्थादःपदार्थानां विशेष्यत्वं स्थाणुत्वादीनां प्रकारत्वं पृथक्प्रकारबोधकपदानभिलापस्थलेऽयमित्यादाविदंपदार्थो विशेष्यमिदंत्वं प्रकारः। घटइतिज्ञाने घटो विशेष्यं घटत्वं प्रकारः। मतुपः इन्प्रत्ययस्यवा प्रकारबोधकपदेऽनुप्रवेशे तत्प्रत्ययप्रकृत्यर्थः प्रकारोभवति। यथा घटवद्भूतलं धनी पुरुषइत्यादौ तत्प्रत्ययप्रकृत्यर्थयो घटधनयोः प्रकारत्वं ज्ञेयम्। एवं विशिष्टपदस्य युक्तपदस्याधिकरणपदादीनांवा प्रकारबोधनस्थले विद्यमानत्वे तत्पदपूर्ववृत्तिपदार्थः प्रकारो भवति। यथा घटविशिष्टं भूतलं घटयुक्तं भूतलं घटाधिकरणं भूतलमित्यादिषु तत्तत्पदपूर्ववृत्तिघटपदार्थीभूतघटः प्रकारो भवति। पूर्वोक्तप्रत्ययद्वयस्य विशिष्टादिपदानांवाऽनुपादाने तत्पदप्रतिपाद्यतावच्छेदकधर्मः प्रकारइति निर्णयः कार्यः। यथा घटोऽनित्यः नीलोघट इत्यादौ तत्प्रत्ययान्यतरस्य विशिष्टादिपदान्यतमस्यवाऽनभिलापस्थले तत्तत्पदप्रतिपाद्यतावच्छेदकानित्यत्वनीलत्वादीनां प्रकारत्वं ज्ञेयम्। अयं प्रकारः भेदसम्बन्धेन वस्तुसाध्यकानुमितिस्थले प्रत्यक्षस्थलेच सर्वत्रापि ग्राह्यः। यथा पर्वतो वह्निमानित्यत्र मतुप्प्रत्ययप्रकृत्यर्थीभूतवह्निः साध्यं चैत्रोधनीत्यत्रेन्प्रत्ययप्रकृत्यर्थीभूतधनञ्च साध्यं भवति। एतत्प्र-

त्ययान्यतरस्य विशिष्टादिपदानांवा विरहस्थले शब्दोऽनित्यः कार्यत्वादित्यादौ साध्यबोधकपदप्रतिपाद्यतावच्छेदकीभूतानित्यत्वादिकं साध्यं भवतीति विज्ञेयम्। अभेदसम्बन्धेन वस्तुसाधकस्थलेऽयंगौः सास्नावत्वादित्यादौ कुत्रचिन्निरुक्तप्रत्ययाद्यभावेपि साध्यवाचकपदप्रतिपाद्यतावच्छेदकाश्रयो गौरेव साध्यतयाङ्गीक्रियते। कम्बुग्रीवादिमत्वान्घटत्वादित्यादावभेदसम्बन्धेनानुमितिस्थलेऽपि पूर्वोक्तविधया कम्बुग्रीवादिमतएव साध्यत्वं विज्ञेयम्। सामान्यधर्मावच्छिन्नवाचकपदघटितवाक्येनाभिलापस्थले सामान्यरूपेण विशेषबोधः। यथा प्रमेयवद्भूतलमित्यादौ प्रमेयत्वादिरूपेण घटादीनां बोधः। विशेषधर्मावच्छिन्नवाचकपदघटितवाक्येनाभिलापस्थले घटवद्भूतलमित्यादौ घटत्वादिरूपेणैव घटादीनां भानम्। शब्दातिरिक्तज्ञानस्थले पूर्वोक्तारीतिर्ग्राह्या। शाब्दज्ञानस्थलेतु पर्वतोवह्निमान् चैत्रो धनी घटविशिष्टंभूतलमित्यादौ निपातातिरिक्तनामार्थयोरभेदसम्बन्धेनान्वयइति नियमानुरोधेन वह्निमदभिन्नः पर्वतः धनस्वाम्यभिन्नश्चैत्रः घटविशिष्टाभिन्नभूतलमिति तत्तद्विशिष्टानामेवाभेदसम्बन्धेन प्रकारत्वं सम्भवति।

ननु मतुबादिप्रत्ययप्रकृत्यर्थानां भेदसम्बन्धेनानुमित्यादिस्थलइव मुख्यविशेष्यांशे प्रकारत्वं सम्भवति। मतुबादिप्रत्ययानां विशिष्टादिपदानांवाभेदसम्बन्धेन शाब्दबोधौपयिकाकांक्षोपयोगितान्नादिनये त्वनुमित्यादिस्थलेष्विव तत्तत्प्रत्ययादिपूर्वभाविनामेव प्रकारत्वं ग्राह्यम्। मतुबादिविरहस्थले नीलोघटः घटोऽनित्यइत्यादौतु नीलाभिन्नो घटः अनित्याभिन्नोघटइत्यभेदसम्बन्धेन प्रकारबोधकपदप्रतिपाद्यतावच्छेदकावच्छिन्नस्यैव प्रकारत्वं ग्राह्यम्। इमामेव रीतिमनुसृत्य सविषयकपदार्थपक्षकेपि शाब्दज्ञानातिरिक्तस्थलइव प्रकारनिर्णयः कार्यः। घटवद्भूतलं भूतले घटइति ज्ञानयोः विशेषणविशेष्यभा-

वभेदेपि नाधाराधेयभावस्य भेदः, उभयत्र भूतलमेवाधारः, घटएवा धेयः । एव मन्यत्रापि बोध्यम् ॥

## —•कार्यतावच्छेदकधर्मनिरूपणम् •—

यद्धर्मविशिष्टं कार्यं भवति स धर्मः कार्यतावच्छेदकः ॥

| | |
|---|---|
| घटत्वविशिष्टं कार्यं | पटत्वविशिष्टं कार्यं |
| घटत्वं कार्यतावच्छेदकं | पटत्वं कार्यतावच्छेदकं |
| घटत्वावच्छिन्ना कार्यता | पटत्वावच्छिन्ना कार्यता |

## *कारणतावच्छेदकधर्मनिरूपणम् *

यद्धर्मविशिष्टं कारणं भवति स धर्मः कारणतावच्छेदकः ॥

| | |
|---|---|
| दण्डत्वविशिष्टं कारणं | तन्तुत्वविशिष्टं कारणं |
| दण्डत्वं कारणतावच्छेदकं | तन्तुत्वं कारणतावच्छेदकं |
| दण्डत्वावच्छिन्ना कारणता | तन्तुत्वावच्छिन्ना कारणता |

## *लक्ष्यतावच्छेदकधर्मनिरूपणम् *

यद्धर्मविशिष्टं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः यो धर्मो य स्यामवच्छेदकः सा तद्धर्मावच्छिन्ना ॥

| | |
|---|---|
| पृथिवीत्वविशिष्टं लक्ष्यं | जलत्वविशिष्टं लक्ष्यं |
| पृथिवीत्वं लक्ष्यतावच्छेदकं | जलत्वं लक्ष्यतावच्छेदकं |
| पृथिवीत्वावच्छिन्ना लक्ष्यता | जलत्वावच्छिन्ना लक्ष्यता |

## *साध्यसाधनतावच्छेदकधर्मनिरूपणम् *

यद्धर्मविशिष्टे साध्यसाधने भवत स्तौ धर्मौ साध्यसाधनतावच्छेदकधकर्मौ भवतः ॥

| | |
|---|---|
| वह्नित्वविशिष्टं साध्यं | धूमत्वविशिष्टं साधनं |
| वह्नित्वं साध्यतावच्छेदकं | धूमत्वं साधनतावच्छेदकं |
| वह्नित्वावच्छिन्ना साध्यता | धूमत्वावच्छिन्ना साधनता |

*व्याप्यव्यापकतावच्छेदकधर्मनिरूपणम् *

यद्धर्मविशिष्टौ व्याप्यव्यापकौ भवतस्तौ धर्मौ व्याप्यव्यापकतावच्छेदकधर्मौ भवतः ॥

| | |
|---|---|
| धूमत्वविशिष्टं व्याप्यं | वह्नित्वविशिष्टं व्यापकं |
| धूमत्वं व्याप्यतावच्छेदकं | वह्नित्वं व्यापकतावच्छेदकं |
| धूमत्वावच्छिन्ना व्याप्यता | वह्नित्वावच्छिन्ना व्यापकता |

एव मेव लक्षणतावच्छेदकादिधर्मनिर्णयः कार्यः ॥

—•आधेयतावच्छेदकसम्बन्धनिरूपणम्•—

येनसम्बन्धेन यदस्तीत्युच्यते तन्निष्ठाधेयता तत्सम्बन्धावच्छिन्ना।

| | |
|---|---|
| संयोगसम्बन्धेन घटो वर्तते | समवायेन पटो वर्तते |
| संयोगसम्बन्धः आधेयतावच्छेदकसम्बन्धः | समवायसम्बन्धः आधेयतावच्छेदकसम्बन्धः |
| संयोगसम्बन्धावच्छिन्ना आधेयता | समवायसम्बन्धावच्छिन्ना आधेयता |

—•प्रतियोगितावच्छेदकसम्बन्धनिरूपणम्•—

येन सम्बन्धेन यन्नास्तीत्युच्यते तन्निष्ठा प्रतियोगिता तत्सम्बन्धावच्छिन्ना ॥

| | |
|---|---|
| संयोगसम्बन्धेन घटो नास्ति | समवायेन पटो नास्ति |
| संयोगसम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः | समवायसम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः |
| संयोगसम्बन्धावच्छिन्ना प्रतियोगिता | समवायसम्बन्धावच्छिन्ना प्रतियोगि(ता |

## —साध्यतावच्छेदकसम्बन्धनिरूपणम्—

येन सम्बन्धेन यस्साध्यते स सम्बन्ध स्साध्यतावच्छेदकसम्बन्धः।

| | |
|---|---|
| संयोगसम्बन्धेन वह्निस्साध्यते | समवायेन सत्ता साध्यते |
| संयोगसम्बन्ध स्साध्यतावच्छेदक सम्बन्धः | समवायसम्बन्ध स्साध्यतावच्छेदक सम्बन्धः |
| संयोगसम्बन्धावच्छिन्ना साध्यता | समवायसम्बन्धावच्छिन्ना साध्यता- |

एवमेव साधनतावच्छेदकादिसम्बन्धनिर्णयः कार्यः ॥

एवमेव कार्यतावच्छेदककारणतावच्छेदकलक्षणतावच्छेदकप्रकारतावच्छेदकसम्बन्धानां निर्णयः कार्यः ।

## —अवच्छिन्नत्वप्रभेदाः—

अवच्छिन्नत्वं नाम अवच्छेद्यत्वम् । पृथिवीत्वावच्छिन्नो गन्ध इत्यत्र अवच्छिन्नत्वं विशिष्टत्वरूपम् । पृथिवीत्वावच्छिन्ना लक्ष्यता इत्यादौ अवच्छिन्नत्वं अवच्छेदकतानिरूपकत्वरूपं पारिभाषिकं पूर्वमुपदर्शितमेव ॥ अग्रे वृक्षः कपिसंयोगी मूले न इत्यत्र सप्तम्योरवच्छिन्नत्वार्थकतया वृक्षः अग्रावच्छेदेन कपिसंयोगवान् (अग्रावच्छिन्नकपिसंयोगवान्) मूलावच्छेदेन कपिसंयोगाभाववान् (मूलावच्छिन्नकपिसंयोगाभाववान्) इति तत्र बोधः। अत्र अग्राद्यवच्छिन्नत्वं अग्रादिकं निमित्तीकृत्य वर्तमानत्वे पर्यवसितम् पूर्वविलक्षणम् । शरीरमस्मदादीना मित्यत्र षष्ठ्यर्थोऽवच्छेदकत्वस्य शरीरे भाने अस्मदादौ जीवरूपशरीरावच्छिन्नत्वभानस्यापरिहार्यतया तच्छरीरावच्छिन्नत्वञ्च शरीरं निमित्तीकृत्य जायमानस्य सुखदुःखादे राश्रयत्वे पर्यवसन्नम्। एवमात्मनो भोगायतनं शरीरमित्यत्र भोगावच्छेदकत्वरूपभोगायतनत्वस्य शरीरे भाने भोगे शरीरावच्छिन्नत्वभानस्या प्यावश्यकत्वेन

अत्र शरीरावच्छिन्नत्वं शरीरं निमित्तीकृत्य जायमानत्वे पर्यवस्यति ।'
तथाच 'शरीरमस्मदादीनाम्' आत्मनो भोगायतनं शरीरम्, अग्रे वृक्षः कपिसंयोगी,ति स्थलत्रितयेऽपि बोध्यमानमवच्छिन्नत्वं किञ्चिद्भेदेन सदृशमेव। घटावच्छिन्नाकाशः, मठावच्छिन्नाकाशः, कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं, अन्तःकरणावच्छिन्नं चैतन्यं जीवः इत्यादौ प्रतीयमानमवच्छिन्नत्वं विशेषणविशिष्टत्वरूपमेव ॥

एवमन्यत्राप्यूह्यम् ॥

*एकविधपदार्थनिरूपणम्*

ईश्वरः आकाशं कालः दिक् सत्तारूपा परजातिः समवायः इत्यादयः एकविधपदार्थाः ।

*द्विविधपदार्थनिरूपणम्*

पृथिव्यप्तेजोवायूनां नित्यानित्यत्वभेदेन द्वैविध्यम् । जीवात्मपरमात्मभेदेन आत्मनो द्वैविध्यम् । सामान्यं द्विविधं पर मपरं चेति। परं सत्ता अपरं द्रव्यत्वादि । गन्धो द्विविधः सुरभि रसुरभिश्चेति । संयोगो द्विविधः कर्मज स्संयोगजश्चेति । आद्यो हस्तक्रियया पुस्तकसंयोगः द्वितीयो हस्तपुस्तकसंयोगा त्कायपुस्तकसंयोगः । कर्मजसंयोगोपि द्विविधः अभिघातसंयोगः नोदनसंयोगश्चेति शब्दहेतुराद्यः शब्दाहेतु र्द्वितीयः । विभागोपि द्विविधः कर्मजो विभागजश्चेति आद्यो हस्तक्रियया पुस्तकविभागः द्वितीयो हस्तपुस्तकविभागा त्कायपुस्तकविभागः । विभागजविभागोऽपि द्विविधः हेतुमात्रविभागजन्यः हेत्वहेतुविभागजन्यश्चेति आद्यः कपालद्वयविभागजन्यः कपालाकाशविभागः द्वितीयः हस्ततरुविभागजन्यः तरुशरीरविभागः। परत्वापरत्वे द्विविधे दिक्कृते कालकृतेचेति दूरस्थे दिक्कृतं परत्वं

ज्येष्ठे कालकृतं परत्वं समीपस्थे दिक्कृतमपरत्वं कनिष्ठे कालकृतमप रत्वं। द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकंचेति आद्यं जले द्विती यं पृथिवीतेजसोः। सांसिद्धिकत्वञ्चाग्निसंयोगादिनिमित्ताजन्यत्वं नैमि त्तिकत्वञ्चाग्निसंयोगादिरूपनिमित्तजन्यत्वं। शब्दो द्विविधः ध्वन्यात्म को वर्णात्मकश्चेति। आद्यः भेर्यादिताडनजन्य श्शब्दः द्वितीयः सं. स्कृतभाषादिरूपः। बुद्धिर्द्विविधा स्मृतिरनुभवश्चेति। अनुभवो द्वि- विधः यथार्थोऽयथार्थश्चेति। स्वप्नोपि मानसविपर्ययरूपएवेति नपृथ. ग्भावः। स्मृतिरपि द्विविधा यथार्थाऽयथार्थाचेति प्रमाजन्या यथार्था अप्रमाजन्याऽयथार्था। प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकंचे- ति। अनुमिति र्द्विविधा स्वार्थानुमितिः परार्थानुमितिश्चेति। शाब्द बोधो द्विविधः वैदिकशाब्दबोधः लौकिकशाब्दबोधश्चेति। अर्थापत्ति र्द्विविधा श्रुतार्थापत्तिःदृष्टार्थापत्ति श्चेति। अनुमितिकरणं द्विविधंस्वार्थानु मानं,परार्थानुमानंचेति। शाब्दबोधकरणं द्विविधं वैदिकशब्दो, लौकि. कशब्दश्चेति। अर्थापत्तिकरणं द्विविधं श्रुतार्थापत्तिः, दृष्टार्थापत्तिश्चे. ति। प्रत्यक्षज्ञानस्थले फलकरणयोरुभयत्रापि प्रत्यक्ष शब्दः प्रवर्तते। अर्थापत्तिस्थले फलकरणयोरुभयत्राप्यर्थापत्तिशब्दः प्रयुज्यते। ज्ञाने च्छाकृतीनां नित्यत्वानित्यत्वभेदेन द्वैविध्यं ईश्वरगतानां तासां नि. त्यत्वं, जीवगतानां तासा मनित्यत्वं। ईश्वरेपि सुखाङ्गीकर्तृमते सुख. स्यापि नित्यत्वानित्यत्वभेदेन द्वैविध्यं ईश्वरे तन्नित्यं जीवे तदनित्यम्। व्याप्ति र्द्विविधा अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्चेति। आद्या हेतुव्या- पकसाध्यसामानाधिकरण्यरूपा द्वितीया साध्याभावव्यापकीभूताभाव- प्रतियोगित्वरूपा। वृत्तिः द्विविधा शक्तिः, लक्षणाचेति आद्या अस्मा त्पदा दयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वरूपा द्वितीया शक्यसम्ब

न्धरूपा। लक्षणा द्विविधा जहल्लक्षणा, अजहल्लक्षणाचेति। शक्या थंपरित्यागेनान्यार्थग्रहणं जहल्लक्षणा। यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरे मञ्चाः क्रोशन्तीत्यादौ मञ्चपदस्य पुरुषेषुच जहल्लक्षणा। शक्यार्थापरित्यागे सत्यन्यार्थग्रहण मजहल्लक्षणा। छत्रिणो यान्तीत्यत्र छत्रपदस्य छत्र्यछत्रिसाधारणसंघत्वावच्छिन्ने काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातुकत्वावच्छिन्ने चाजहल्लक्षणा। जीवब्रह्मणोरैक्यं ब्रुवतां वेदान्तिनां मते जहदजहल्लक्षणाचाङ्गीक्रियते। तन्मते तत्त्वमसीत्यादिषु चैतन्यादिरूपव्यक्तिमात्रबोधनार्थं जहदजहल्लक्षणा। नैयायिकानां मतेतु सा नास्तीति लक्षणाद्वयमेव। लक्षणं द्विविधं व्यावहारिकं व्यावर्तकंचेति। व्यावहारिकत्वञ्च व्यवहारप्रयोजकत्वं व्यावर्तकत्वं चेतरभेदानुमापकत्वम्। यथाऽद्यं पृथिव्याः पृथिवीत्वं द्वितीयं तस्या गन्धवत्त्वं। अन्वयव्यतिरेकद्वयं यत्सत्वेयत्सत्वमन्वयः यदभावे यदभावो व्यतिरेकः। प्रथमयत्पदं कारणत्वे नाभिमतपरम्। द्वितीययत्पदंकार्यत्वेनाभिमतपरंयत्सत्वे यदनुत्पत्तिरन्वयव्यभिचारः यदभावे यदुत्पत्तिर्व्यतिरेकव्यभिचारः। अभावो द्विविधः संसर्गाभावोन्योन्याभावश्चेति। हेतुर्द्विविधः सद्धेतुरसद्धेतुश्चेति। आद्यः व्याप्तिपक्षधर्मताविशिष्टः द्वितीयः व्याप्तिपक्षधर्मत्वोभयाभाववान्। असद्धेतुमात्रे चैकसत्वे द्वयंनास्तीत्याकारकप्रतीत्या प्रत्येकाभावप्रयुक्तः उभयाभावप्रयुक्तो वोभयाभाव स्सम्भवत्येव। शुक्लरूपं द्विविधं भास्वरशुक्लमभास्वरशुक्लंचेति आद्यं तेजसि द्वितीयं जले। पदार्थो द्विविधः व्याप्यवृत्तिरव्याप्यवृत्तिश्चेति आद्यः घटत्वपटत्वादिः द्वितीयः कपिसंयोगादिः। पदार्थः प्रकारान्तरेण द्विविधः भावोभावश्चेति। द्रव्यादयः षड्भावाः प्रागभावादयश्चत्वारोऽभावाः। ज्ञानं पुनरपि द्विविधं संशयो निश्चयश्चेति

आद्यः स्थाणुर्वा पुरुषोवेति द्वितीयः अयं स्थाणुरिति। स्मृतिरपि निश्चयरूपैव। ज्ञानं पुनरपि द्विविधं आहार्यमनाहार्यंचेति। बाधकालीनेच्छाजन्यज्ञानमाहार्यं तद्भिन्नमनाहार्यम। आहार्यज्ञानमपि द्विविधं नियताहार्यमानयताहार्यंचेतिस्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारक ज्ञानं नियताहार्यं यथा वह्निमत्पर्वतो वह्न्यभाववानिति। तद्भिन्न मनियताहार्यं यथा ह्रदो वह्निमानिति ज्ञानम। अनियताहार्यानाहार्ययोः बाधकालीनेच्छाजन्यत्वतदजन्यत्वाभ्यामेव भेदो ज्ञेयः नत्वाकारतो भेदः। उभयत्र ह्रदो वह्निमानित्यस्यैवाकारत्वात् वह्निमत्पर्वतो वह्न्यभाववानिति ज्ञानस्य नियतमिच्छाजन्यत्वन नियताहार्यत्वव्यवहारः। नियताहार्यानाहार्यज्ञानयो स्वाकारतोऽपि भेदो वर्ततएव। यथा वह्निमद्ध्रदो वह्न्यभाववानिति ज्ञानं द्वितीयं ह्रदो वह्निमानिति ज्ञानं। ज्ञानं पुनरपि द्विविधं अप्रामाण्यज्ञानास्कन्दितं तदनास्कन्दितंचेति।

सम्बन्धो द्विविधः वृत्तिनियामकः वृत्त्यनियामकश्चेति, आद्यः संयोगसमवायस्वरूपकालिकपर्याप्तिस्वाभाववद्वृत्तित्वादिरूपः द्वितीयस्तु वैज्ञनिरूप्यनिरूपककोटिप्रविष्टविषयत्वादिरूपःपरम्परासम्बन्धरूपश्च। अनुमितिः पुनरपि द्विविधा पक्षतावच्छेदकावच्छेदेनानुमितिः पक्षतावच्छेदकसामानाधिकरण्येनानुमितिः। पदार्थः प्रकारान्तरेण द्विविधः केवलान्वयी व्यतिरेकीचेति। अवच्छेदकत्वं द्विविधं स्वरूपसम्बन्धरूपमनतिरिक्तवृत्तित्वरूपश्चेति। दण्डत्वं घटकारणतावच्छेदकमित्यत्रावच्छेदकत्वं स्वरूपसम्बन्धरूपम्। हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्यत्र गुरुधर्मस्यावच्छेदकत्वाभ्युपगमे प्रमेयधूमवान्वह्नेरित्यत्र प्रसक्तस्यातिव्याप्तिदोषस्य वारणार्थमनवच्छेदकत्वघटकीभूतावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं। तर्को द्विविधः कार्यकारणभावभङ्गप्रसङ्गलक्षणः व्याप्यव्यापकभावभङ्गप्रसङ्गलक्षणश्चेति। पर्वते धूमोस्तु वह्निर्मास्त्वित्यप्रयोजकशङ्कायां प्रसक्तायां तन्निवृत्त्यर्थं

धूमे वह्निजन्यत्वं नस्यादिति कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्क उपयोक्तव्यः। द्रव्यं विशिष्टसत्त्वादित्यादौ निरुक्तरीत्याऽप्रयोजकशङ्कायां प्रसक्तायां विशिष्टसत्ताया नित्यतया धूमंप्रति वह्नेरिव विशिष्टसत्तां प्रति द्रव्यत्वस्य कारणत्वाभावेन कार्यकारणभावभङ्गप्रसङ्गलक्षणतर्कस्योपयोक्तुमशक्यतया यत्र विशिष्टसत्ता तत्र द्रव्यत्वमिति नियमो नस्यादिति व्याप्यव्यापकभावभङ्गप्रसङ्गलक्षणएव तर्क उपयोक्तव्यः। कुत्रचित्कार्यकारणभावभङ्गप्रसङ्गलक्षणतर्कप्रसक्तिस्थले व्याप्यव्यापकभावभङ्गप्रसङ्गलक्षणोऽपि तर्क उपयोक्तुं शक्यते। यथा पर्वतो वह्निमान् धूमादित्यादौ यदि वह्निर्नस्या तर्हि धूमोपि नस्यादिति कार्यकारणभावभङ्गप्रसङ्गलक्षणतर्कस्य यत्रधूमस्तत्राग्निरिति नियमो नस्यादिति व्याप्यव्यापकभावभङ्गप्रसङ्गलक्षणतर्कस्यचोपयोक्तुं शक्यत्वात्। अतः यत्र हेतुसाध्ययोः कार्यकारणभावस्तुप्रसिद्ध स्तत्र कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्क उपयोक्तव्यः। अन्यत्रतु व्याप्यव्यापकभावभङ्गप्रसङ्गलक्षणस्तर्क उपयोक्तव्य इति सिद्धम्। कारणत्वं द्विविधं फलोपधानरूपं स्वरूपयोग्यतारूपंचेति स्वजनकत्वसम्बन्धेन फलविशिष्टत्वं फलोपधानरूपं जनकत्वं तच्च साक्षात्फलजनकीभूतवस्तुष्वेव सम्भवति। जनकतावच्छेदकधर्मवत्त्वं स्वरूपयोग्यतारूपं जनकत्वं तच्च साक्षाद्घटानुपधायके व्यारण्यकदण्डादौ सम्भवति। रूपादिचतुष्टयस्य पाकजापाकजभेदेन द्वैविध्यम्। रूपरसगन्धस्पर्शसङ्ख्यापरिमाणद्रवत्वस्नेहबुद्धीच्छाप्रयत्नानां नित्यत्वानित्यत्वभेदेन द्वैविध्यं जलादित्रये वर्तमाननांचाद्यानां चतुर्णां नित्यवृत्तित्वान्नित्यत्वं अनित्यवृत्तीनां तासामनित्यत्वं संख्यापरिमाणद्रवत्वस्नेहानां नित्यवृत्तीनां नित्यत्वमनित्यवृत्तीनामनित्यत्वं किन्तु द्वित्वादिसङ्ख्याया नित्यवृत्तेरप्यपेक्षाबुद्धिजन्यतयाऽनित्यत्वमेव ज्ञानेच्छाकृतीनां त्वीश्वरवृत्तीनां नित्यत्वं जीववृत्तीनां तासामनित्यत्वं नित्यवृत्ते गुरुत्वस्य नित्यत्वं अ-

नित्यवृत्ते रनित्यत्वम् । पृथक्त्वपरत्वापरत्वानां नित्यवृत्तीनामप्य. पे ,क्षा बुद्धि ज न्य त या, सं यो ग वि भा ग योः क्रि या ज न्य त या ईश्वरे मत विशेषे नित्य सुखा न ङ्गी का रे ण जी व वृ त्ति सु ख स्य विषयजन्यतया दुःखद्वेषधर्माधर्मसंस्काराणा मीश्वरेऽनङ्गीकारेण जीववृत्तीनां तेषां सनिमित्तकत्वेन यज्जन्यं तदनित्यमिति व्याप्त्या जन्याना मेषां नाशस्यावश्यमभ्युपेयतया पृथक्त्वसंयोगविभागपरत्वाप रत्वशब्दसुखदुःखद्वेषधर्माधर्मसंस्काराणां नित्यत्वं नास्त्येव । किन्तु सर्वेषामेतेषामनित्यत्वमेव । उभयाभावो द्विविधः प्रत्येकाभावप्रयुक्तः उ. भयाभावप्रयुक्तश्चेति आद्यः पटे घटत्वद्रव्यत्वोभयाभावः द्वितीयः गुणादौ घटत्वद्रव्यत्वोभयाभावः । इच्छा द्विविधा फलविषयिणी उपायविषयि णीचेति । द्वेषो द्विविधः फलविषयकः उपायविषयकश्चेति । निश्चयो द्विविधः उपेक्षात्मकः उपेक्षानात्मक श्चेति आद्यः स्मरणप्रत्यभिज्ञाद्यज नकः द्वितीय स्तदुभयजनकः । वेगो द्विविधः कर्मज स्संयोगज श्चेति । योगजसन्निकर्षो द्विविधः युक्तयोगजन्यः युञ्जानयोगजन्यश्चेति योगज सन्निकर्षोनाम योगजन्यधर्मविशेषः चिन्ताद्यसहकृतयोगजन्यधर्मविशे. षः युक्तयोगजन्यस्सान्निकर्षः । चिन्तासहकृतयोगजन्यधर्मविशेषःयुञ्जा. नयोगजन्यस्सान्निकर्षः।सम्बन्धःपुनरपिद्विविधःसाक्षात्संबंधःपरम्परासम्ब न्ध श्चेति। आद्यस्संयोगसमवायादिः द्वितीयःस्वज्ञानविषयप्रकृतहेतुताव- च्छेदकधर्मवत्त्वादिसम्बन्धः । सम्बन्धःप्रकारान्तरेण द्विविधः भेदस- म्बन्धः अभेदसम्बन्धश्चेति आद्यः अभेदातिरिक्तसम्बन्धः अभेदसम्ब- न्धस्तादात्म्यसम्बन्धः । लक्षणाबीजं द्विविधं अन्वयानुपपत्तितात्पर्या नुपपत्तिभेदात् । गङ्गायां घोषः माञ्चाः क्रोशन्ति सिंहो माणवकः सोयं देवदत्त इत्यादावन्वयानुपपत्तिः । यष्टीः प्रवेशय काकेभ्यो दधि रक्ष्यतां छत्रिणोयान्ति सैन्धवमानयेत्यादिषु तात्पर्यानुपपत्तिरेव लक्षणा- बीजं । अन्वयानुपपत्ते र्लक्षणास्थलेषु सर्वत्र सम्भवाभावेन तात्पर्यानु-

षपरो स्सर्वत्रापि सम्भवेन सर्वत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति बहूनां सिद्धान्तः। प्रवृत्तिः प्रकारान्तरेण द्विविधा निष्कम्पप्रवृत्तिः सकम्पप्रवृत्तिश्चेति। आद्या पूर्वोत्पन्नज्ञाने प्रामाण्यनिश्चयहेतुका द्वितीया तस्मिन् ज्ञाने प्रामाण्यसंशयहेतुका। निष्कम्पत्वं सकम्पत्वंच विषयताविशेषः। हेतुर्द्विविधः समव्याप्तहेतुः विषमव्याप्तहेतुश्चेति। समव्याप्तत्वञ्च हेतुव्यापकसाध्यव्यापकत्वम्। विषमव्याप्तत्वञ्च हेतुव्यापकसाध्यव्यापकत्वं। प्रतिबध्यप्रतिबन्धकभावग्राहकान्वयव्यतिरेकद्वयम्। यत्सत्वे यदनुत्पत्ति रन्वयः यदभावे यदुत्पत्तिर्व्यतिरेकः प्रथमयत्पदं प्रतिबन्धकत्वेनाभिमतपरम्। द्वितीययत्पदं प्रतिबध्यत्वेनाभिमतपरम्। पञ्चावयववाक्यं द्विविधं अन्वयपञ्चावयववाक्यं व्यतिरेकपञ्चावयववाक्यंचेति। आद्यं पर्वतो वह्निमान्धूमवत्त्वात् यो यो धूमवान् ससोऽग्निमान्यथा महानसः तथाचायं तस्मात्तथा इति॥ द्वितीयं पर्वतो वह्निमान् धूमवत्त्वात् यो यो वह्न्यभाववान् स धूमाभाववान् यथा महाह्रदः नचायंतथा तस्मा न्नतथेति। कारणं द्विविधं साधारणकारणमसाधारणकारणंचेति। कार्यमात्रं प्रतीश्वरादृष्टादि साधारणकारणम्। कार्यविशेषंप्रति कारणं द्वितीयं यथा घटादिकंप्रति दण्डादिकम्॥

## ॥त्रिविधवस्तुनिरूपणम्॥

पृथिव्यप्तेजोवायूनां शरीरेन्द्रियविषयभेदेन पुनरपि त्रैविध्यं स्पर्शस्त्रिविधः शीतोष्णानुष्णाशीतभेदात्। संयोगः प्रकारान्तरेण त्रिविधः एककर्मजन्यः उभयकर्मजन्यः संयोगजन्यश्चेति, आद्यः श्येनशैलसंयोगः, द्वितीयः मेषद्वयसंयोगः, तृतीयः हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगः। विभागोपि त्रिविधः एककर्मजन्यः उभयकर्मजन्यः विभागजन्यश्चेति, आद्यश्श्येनशैलविभागः, द्वितीयःमेषद्वयविभागः, तृतीयः हस्तपुस्तकविभागात्कायपुस्तकविभागः। शब्दस्त्रिविधः संयोगजो विभागजश्शब्दजश्चेति, आद्यः भेरीदण्डसंयोगजन्यः, द्वितीयः वंशाकाश.

विभागजन्यः तृतीयः पूर्वपूर्वशब्दोत्पन्नाद्द्वितीयादिशब्दसमुदायः । कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात् । अलौकिकसन्निकर्षस्त्रिविधः सामान्यलक्षणः ज्ञानलक्षणः योगजलक्षणश्चेति, आद्यः व्याप्तिज्ञानादौ निखिलवह्निधूमभानार्थमङ्गीकृतः, द्वितीयः सुरभि चन्दनमित्यादौ सुरभिगन्धत्वादिभानार्थं, तृतीयः योगिनामतीतानागतसर्ववस्तुसाक्षात्कारार्थमङ्गीकृतः, सामान्यलक्षणसन्निकर्षस्तु सामान्याश्रयस्य यावतो ज्ञानं जनयति, ज्ञानलक्षणस्तु स्वविषयविषयकज्ञानं जनयतीतीयान्भेदः आद्यद्वितीयौ पर्यवसाने ज्ञानरूपावेव । लिङ्गं त्रिविधं अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकीचेति । सव्यभिचारस्त्रिविध स्साधारणासाधारणानुपसंहारिभेदात् । असिद्धस्त्रिविधः आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति । अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात्, उत्कटैकतरकोटिकसंशय स्सम्भावना, एपा संशयएवान्तर्भवति । संस्कारास्त्रिविधः वेगोभावनास्थितस्थापकश्चेति । विषयता त्रिविधा विशेष्यता प्रकारता संसर्गताचेति संसर्गाभावस्त्रिविधः प्रागभावः प्रध्वंसाभावः अत्यन्ताभावश्चेति । लक्षणादोषास्त्रयः, अतिव्याप्तिरव्याप्तिरसम्भवश्चेति । आत्माश्रयादिदोषत्रयं आत्माश्रयः, अन्योन्याश्रयः, चक्रकापत्तिश्चेति । जन्यभावत्रयं द्रव्यंगुणकर्मणीचेति । कृतिनिरूपिताविषयता त्रिविधा । उद्देश्यता विषयता उपादानताचेति । अन्नम्भट्टाशयानुरोधेनान्यथासिद्धस्त्रिविधः पटंप्रति तन्तुरूपं तन्तुत्वञ्च प्रथमान्यथासिद्धम् । पटंप्रत्याकाशं द्वितीयान्यथासिद्धम् । पाकजस्थले गन्धंप्रति रूपप्रागभावः तृतीयान्यथासिद्धः । प्रयत्नास्त्रिविधः प्रवृत्तिः निवृत्तिः जीवनयोनिश्चेति । आद्यो भोजनादौ, द्वितीयो विषभक्षणादौ, तृतीयः प्राणधारणार्थम् । औपाधिकं कालत्रयं अतीतानागतवर्तमानकालत्रयम् । परिमाणं प्रकारान्तरेण त्रिविधं अणुपरिमाणं मध्यपरिमाणं परममहत्परिमाणं त्रि.

भुपरिमाणं चेति, आद्यं परमाण्वादौ, द्वितीयं द्व्यणुकादित्रसरेण्वन्ते, भिन्ने द्रव्ये, तृतीयमाकाशादिचतुष्टये वर्तते । विशिष्टाभावस्त्रिविधः विशेष्याभावप्रयुक्तः विशेषणाभावप्रयुक्तः उभयाभावप्रयुक्तश्चेति, आद्यः पटे द्रव्यत्वविशिष्टघटत्वाभावः, द्वितीयः पटे घटत्वविशिष्टद्रव्यत्वाभावः, तृतीयः गुणादौ घटत्वविशिष्टद्रव्यत्वाभावः । कर्मजन्यत्रयं संयोगविभागवेगत्रयं । अनित्यपरिमाणं त्रिविधं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यंचेति, त्र्यणुकनिष्ठपरिमाणं द्व्यणुकनिष्ठत्रित्वसङ्ख्याजन्यमाद्यं, घटाद्यवयविनिष्ठपरिमाणं कपालाद्यवयवनिष्ठपरिमाणजन्यं द्वितीयं । तूलकादिनिष्ठपरिमाणं प्रचयजन्यं तृतीयं । प्रचयः शिथिलाख्यसंयोगः । चिकीर्षांप्रति कारणत्रयं कृतिसाध्यताज्ञानेष्टसाधनताज्ञानबलवदनिष्टाननुबन्धित्वज्ञानत्रयम् । चिकीर्षानाम कृतिसाध्यत्वप्रकारकेच्छा, कृतिसाध्यताज्ञानस्य चिकीर्षांप्रति कारणत्वानङ्गीकारे चन्द्रमण्डलानयनादौ वृष्ट्यादौच चिकीर्षाप्रसङ्गः । इष्टसाधनताज्ञानस्य कारणत्वानङ्गीकारे शत्रुगृहगमनादौ चिकीर्षाप्रसङ्गः बलवदनिष्टाननुबन्धित्वज्ञानस्य कारणत्वानङ्गीकारे विषसम्पृक्तान्नभक्षणादौ चिकीर्षाप्रसङ्गः, अतो ज्ञानत्रयस्य चिकीर्षांप्रति कारणत्वमङ्गीकार्यं, बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकत्वाङ्गीकर्तृमते बलवदनिष्टाननुबन्धित्वज्ञानस्य कारणत्वं नाङ्गीक्रियते । किं त्वाद्ययो र्द्वयोरेव कारणत्वं तन्मते अङ्गीकार्यम् । अवस्थात्रयं जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयं । एवकारः त्रिविधः विशेष्यसङ्गतः विशेषणसङ्गतः क्रियासङ्गतश्चेति, पार्थएव धनुर्धर इत्यत्र विशेष्यसङ्गतः, शङ्खः पाण्डुर एवेत्यत्र विशेषणसङ्गतः, नीलमुत्पलं भवत्येवेत्यत्र क्रियासङ्गत एवकार इति बोध्यम् ॥

## चतुर्विधपदार्थनिरूपणम्

परिमाणं चतुर्विधं अणुमहद्दीर्घह्रस्वं चेति, भावप्रधाननिर्देशेन ।

प्रवादिपदमणुत्वादिपरम् । अभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति । विभुचतुष्टयं आकाशकालदिगात्मचतुष्टयम् । भूतमूर्तपदार्थचतुष्टयं पृथिव्यप्तेजोवायुचतुष्टयम् । यथार्थानुभवश्चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । अयथार्थानुभवश्चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । पर्वतो धूमवान्वह्निरित्यत्र धूमव्याप्यवह्निमान् पर्वतइति भ्रमात्मकादपि परामर्शात् पर्वतो धूमवानिति प्रमात्मकानुमितिर्भवत्येव । प्रमात्मकपरामर्शाद् भ्रमात्मकानुमितिः कुत्रापि न सम्भवति कुतः ह्रदो वह्निमानित्यनुमितिः भ्रमात्मकानुमितिः अत्र धूमादे हेतुत्वे पक्षधर्मत्वांशे परामर्शस्य भ्रमत्वं द्रव्यत्वादे हेतुत्वे व्याप्त्यंशे परामर्शस्य भ्रमत्वं सम्भवति ॥

प्रमात्मकपरामर्शात्प्रमात्मकानुमितिः भ्रमात्मकपरामर्शाद् भ्रमात्मकानुमितिश्च निर्विवादा । क्वचिद् भ्रमात्मकपरामर्शात्प्रमात्मकानुमितिश्च भवति । प्रमाणं चतुर्विधं प्रत्यक्षानुमानोपमानशाब्दभेदात् । उपाधिश्चतुर्विधः केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति, पक्षधर्मावच्छिन्नत्वादेस्साध्येन्वयः, पक्षधर्मावच्छिन्नत्वञ्च सामानाधिकरण्यसम्बन्धेन पक्षधर्मविशिष्टत्वं, उदासीनत्वञ्च पक्षधर्मसाधनातिरिक्तत्वम् । क्षणोपाधिचतुष्टयं स्वजन्यविभागप्रागभावावच्छिन्नं कर्म पूर्वसंयोगावच्छिन्नाविभागोवा पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावोवा उत्तरसंयोगावच्छिन्नं कर्मवा क्षणोपाधि स्स्यात् । तेजोविषयश्चतुर्विधः भौमदिव्यौदर्याकरजभेदात् । सामान्यादिचतुष्टयं सामान्यविशेषसमवायाभावचतुष्टयम् । रूपादिचतुष्टयं रूपरसगन्धस्पर्शचतुष्टयम् । औपाधिकं दिक्चतुष्टयं प्राचीदिक्प्रतीचीदिगुदीचीदिगवाचीदिक्चतुष्टम् ।

पञ्चविधपदार्थनिरूपणम्

भूतपञ्चकं पृथिव्यप्तेजोवाय्वाकाशपञ्चकम् । मूर्तपञ्चकं पृथि

व्यप्तेजोवायुमनःपञ्चकम्। प्राणादिपञ्चकं प्राणापानव्यानोदानसमानपंचकम् । आकाशादिपञ्चकं नाम आकाशकालदिगात्ममनःपंचकं । कर्मपंचकं नाम उत्क्षेपणापक्षेपणाकुंचनप्रसारणगमनपंचकम् । सविषयकपदार्थपंचकं ज्ञानेच्छाकृतिसंस्कारद्वेषपंचकम् । हेत्वाभासः पंचविधः सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितभेदात् । अवयवपंचकं प्रतिज्ञाहेतूदाहरणोपनयनिगमनपंचकं । विश्वनाथपंचाननाशयानुरोधेनान्यथासिद्धपंचकं घटादिकंप्रति दण्डत्वादिकं प्रथमान्यथासिद्धम । दण्डरूपादिकं द्वितीयान्यथासिद्धं । व्योमप्रभृतितृतीयान्यथासिद्धं । कुलालजनकप्रभृति चतुर्थान्यथासिद्धं । रासभादिकं पंचमान्यथासिद्धम् । सर्वमेत चान्यथासिद्धसामान्य लक्षणं अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वमेव । घटादिकंप्रति क्लृप्तनियतपूर्ववृत्तिनो दण्डचक्रसलिलकुलालादयः तद्भिन्नत्वंच दण्डत्वदण्डरूपादिनिरुक्तान्यथासिद्धेषु वर्ततइति लक्षणसङ्गतिः । प्रवृत्तिकारणपंचकं चिकीर्षाकृतिसाध्यताज्ञानेष्टसाधनताज्ञानबलवदनिष्टाननुबन्धित्वज्ञानोपादानप्रत्यक्षपंचकं । एतत्कारणपंचकप्रयोजनंतु चिकीर्षास्थल इव ज्ञेयम् ॥

षड्विधपदार्थनिरूपणम्

भावषट्कं द्रव्यगुणकर्मसामान्यविशेषसमवायषट्कं । रसष्षड्विधः मधुराम्ललवणकटुकषायतिक्तभेदात् । प्रत्यक्षप्रमाणं षड्विधं त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणमनोभेदात् । एतदेवेन्द्रियषट्क मुच्यते। लौकिकसन्निकर्षष्षड्विधः संयोगस्संयुक्तसमवायस्संयुक्तसमवेतसमवायस्समवायस्समवेतसमवायो विशेषणविशेष्यभावश्चेति ॥

जातिबाधकषट्कम् ।

व्यक्ते रभेद स्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ इति ॥

सप्तविधपदार्थनिरूपणं

पदार्थसप्तकं द्रव्यगुणकर्मसामान्यविशेषसमवायाभावसप्तकं। रूपं सप्तविधं शुक्लनीलपीतरक्तहरितकपिशाचित्रभेदात् ॥

नवविधपदार्थनिरूपणं

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि ॥

षोडशपदार्थनिरूपणं

प्रमाण प्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्तावयव तर्कनिर्णय वाद जल्प वितण्ड हेत्वाभास च्छल जाति निग्रहस्थानानि षोडशपदार्था गौतममते ऽङ्गीकृताः

•एकविंशतिविधपदार्थनिरूपणम्•

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासः हेत्वन्तरं अर्थान्तरं निरर्थकं अविज्ञातार्थकं अपार्थकं अप्राप्तकलं न्यूनं अधिकं पुनरुक्तं अननुभाषणं अज्ञानं अप्रतिभा विक्षेपः मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः अपसिद्धान्त इति निग्रहस्थानान्येकोनविंशतिः। वादिनोपजयहेतुर्निग्रहस्थानम् ॥

•चतुर्विंशतिविधपदार्थनिरूपणम्

रूप, रस, गन्ध, स्पर्श, सङ्ख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्वा,ऽपरत्व, गुरुत्व, द्रवत्व, स्नेह, शब्द, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्मा,ऽधर्म, संस्काराश्चतुर्विंशतिर्गुणाः ॥

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रस

ङ्गप्रतिदृष्टान्तानुत्पत्ति संशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाश्चतुर्विंशतिर्जातयः । असदुत्तरं जातिः स्वव्याघातकमुत्तरं जातिरिति लक्षणम् ॥

अनन्तपदार्थनिरूपणम्

जीवात्मनः मनांसि विशेषाः परमाणव इत्यादयः ॥

नियमाः

प्रतीतिव्यवहाराभ्यामर्थसिद्धिः । यद्वैशिष्ट्यं यत्र भासते स एव स्वपदार्थः । प्रकृत्यर्थे प्रकारीभूतधर्मो भावप्रत्ययार्थः । यदुत्तरं प्रत्ययः विधीयते स प्रकृतिः । यस्याभाव स्सप्रतियोगी । यद्धर्मविशिष्टं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः यो धर्मो यस्यामवच्छेदकः सा तद्धर्मावच्छिन्ना । येन सम्बन्धेन यदस्तीत्युच्यते तन्निष्ठाधेयता तत्सम्बन्धावच्छिन्ना । येन सम्बन्धेन यन्नास्तीत्युच्यते तन्निष्ठा प्रतियोगिता तत्सम्बन्धावच्छिन्ना । विग्रहवाक्यात् यादृशविशेषणविशेष्यभावापन्नपदार्थविषयकबोधो जायते समासवाक्यात्तद्विपरीतबोधो जायते । निपातातिरिक्तनामार्थयोरभेदसम्बन्धेनान्वयः । विशेषणवाचकपदोत्तरवर्तिविभक्तेर्निरर्थकत्वमिति केचन । तस्या अभेदार्थकत्वमित्यपरे । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम् । गुणे गुणानङ्गीरः । सर्वाधारः कालः । जन्यानां कालोपाधित्वम् । मूर्तानां दिगुपाधित्वम् । नित्येषु कालिकायोगः । विभिन्नकालीनपदार्थयो र्विषयत्वान्यसम्बन्धेनाधाराधेयभावविरहः । उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च तिष्ठति । यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठाजातिस्तदभावश्च तेनेन्द्रियेण गृह्यते । नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमः । ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वम् । अनुच्छे-

त्वयमामनात्मखण्डोपाध्यतिरिक्तधर्माणां स्वरूपतो भाने प्रमाणाभावः। विशेषणाभावाद्विशिष्टाभावः विशेष्याभावाद्विशिष्टाभावः उभयाभावा-द्विशिष्टाभावः। एकसत्त्वे द्वयं नास्ति। ध्वंसभिन्नं यज्जन्यं तद-नित्यम्। एकधर्मावच्छिन्नाऽऽधेयतैका। सम्भवति दृष्टफलकत्वेऽदृष्ट-फलकल्पनाऽन्याय्या। सविषयार्थबोधकधातुसमभिव्याहृतद्वितीयार्थी-भूतकर्मत्वं विषयताख्यं। आदौ क्रिया क्रियातो विभागः विभागा-त्पूर्वसंयोगनाशः पूर्वसंयोगनाशादुत्तरसंयोगोत्पत्तिः॥

शब्दबुद्धयो द्विक्षणावस्थायित्वम्। अर्थं बुद्ध्वा शब्दरचना। असन्निकृष्टपदार्थस्य प्रत्यक्षे भानं नसम्भवति। अपदार्थस्य शा-ब्दबोधे भानं नसम्भवति। आधारा स्त्वनुयोगिन. आधेयाः प्र-तियोगिनः। सम्बन्धमात्रस्य किंचित्प्रतियोगिकत्वम् किंचिदनुयो-गिकत्वम्। यत्र सम्बन्धस्तत्र तेन सम्बन्धेन सम्बन्धी। एकस-म्बन्धिज्ञानमपरसम्बन्धिस्मारकं। सम्बन्धसम्बन्ध्युभयसत्तायास्सम्ब-न्धिप्रतीतिनियामकत्वम्। अभावमात्रस्य स्वप्रतियोगितावच्छेदक-सम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिक-रणतया साकं विरोधः। पदार्थः पदार्थेनान्वेति नत्वेकदेशेन। समा-नज्ञानीयसमानाधिकरणप्रकारताविशेष्यतयो रभेदइति केचन। तयो-रवच्छेद्यावच्छेदकभावइत्यपरे। यद्धर्मावच्छिन्नवाचकपदोत्तरं यावत्प-दं सामान्यपदंवा श्रूयते तद्धर्मव्यापकत्वं विधेयांशे भासते। अस-तिबाधके उद्देश्यतावच्छेदकधर्मव्यापकत्वं विधेयांशे भासते। व्या-प्यवृत्तिजातीयधर्माणामव्याप्यवृत्तित्वे प्रमाणाभावः। जातित्वेनाभि-मतसङ्करस्य जातिबाधकत्वम्। द्रव्यत्वव्याप्यव्याप्यजातेः परमाणुवृ-त्तित्वे प्रमाणाभावः। समुदायः प्रत्येकान्नातिरिच्यते। विशिष्टं शु-द्धान्नातिरिच्यते। उभयत्वमुभयत्र पर्याप्तं नत्वेकत्र। भेदस्य

व्याप्यवृत्तित्वानियमः । अव्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावः । सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहृतनञः अत्यन्ताभावार्थकत्वम् ॥

परिष्काराः

व्यापकत्वं तदधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमेकम् तदधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वमपरम् । अधिकदेशवृत्तित्वरूपव्यापकत्वमप्यस्ति तच्च स्वसामानाधिकरण्ये सति स्वाभावसामानाधिकरण्यम् । व्याप्यत्वं तदभाववदवृत्तित्वरूपमेकं स्वव्यापकतत्कत्वं तत्सामानाधिकरण्यं, अपरं । न्यूनदेशवृत्तित्वरूपव्याप्यत्वमप्यस्ति तच्च स्वसमानाधिकरणत्वे सति स्व समानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेकम् । स्वसमानाधिकरणत्वेसति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमपरम् । स्वव्यापकत्वेसति स्वव्याप्यत्वं स्वसमनियतत्वम् । हेतुव्यापकसाध्यव्यापकत्वं हेतौ समभिव्याप्तत्वं यथा सत्तावान् जातेरित्यत्र जातिरूपहेतौ एतद्रूपवानेतद्रसादित्यत्रैतद्रसरूपहेतौ समव्याप्तहेतुत्वं वर्तते । स्वव्यापकसाध्याव्यापकत्वं हेतौ विषमव्याप्तत्वं यथा पर्वतो वह्निमान् धूमादित्यत्र धूमे विषमव्याप्तहेतुत्वं वर्तते। पतने आद्यत्वञ्च स्वसमानाधिकरणपतनप्रतियोगिकध्वंससमानकालिकम् यद्यत्त्वं तद्भिन्नत्वं । चरमवर्णध्वंससमाप्ति । वर्णे चरमत्वञ्च स्वघटितग्रन्थघटकवर्णप्रागभावसमानकालिकं यद्यत्त्वं तद्भिन्नत्वं । विजातीयज्ञानानन्तरितसजातीयज्ञानपरम्पराऽध्यानम् । स्वोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारो वन्दनं । कण्ठताल्वाद्यभिघातसंयोग उच्चारणम् । आद्यकृतिरारम्भः । अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धत्वं सङ्गतित्वम् । ज्ञानजनकशब्दघटकवर्णाभिव्यञ्जकरेखोपविलेखनं लिपिः । स्वविषयत्वस्वसामानाधिकरण्योभयसम्बन्धेन बाधकालीनेच्छाविशिष्टान्यत्वमनाहार्यत्वम् । निरुक्तसम्बन्धद्वयेनाप्रामाण्यज्ञानाविशिष्टान्यत्वमप्रामाण्य.

ज्ञानानास्कन्दितत्वं । संशयभिन्नत्वं निश्चयत्वं । कारणीभूताभावप्रति-योगित्वं प्रतिबन्धकत्वं । प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वं उत्तेजकत्वं । विषयतानिरूपकत्वं सविषयकत्वं । भेदकूटावच्छिन्नप्र-तियोगिताकभेदवत्त्वमन्यतमत्वम् । भेदद्वयावच्छिन्नप्रतियोगिताक भेदवत्त्व मन्यतरत्वम् । ज्ञानशून्यावस्था सुषुप्तिः । परस्परात्य न्ताभावसमानाधिकरणयोर्द्धर्मयो रेकत्र समावेशस्सङ्करः अथवा स्वसमा नाधिकरणस्वाभावसामानाधिकरण्यस्वसमानाधिकरणभेदप्रतियोगिता-वच्छेदकत्वैतत्त्रितयसम्बन्धेन जातिविशिष्टत्वं तत् । अप्रामाणिका नन्तसजातीयपदार्थकल्पनाधाराविश्रान्त्यभावोऽनवस्था । समवाये एक त्वञ्च स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टा-न्यपदार्थविभाजकोपाधिमत्त्वम् । स्वप्रतियोगित्वस्वसमानाधिकरण्यो-भयसम्बन्धेनाभावविशिष्टत्वमव्याप्यवृत्तित्वम् । निरुक्तसम्बन्धद्वयेना भावविशिष्टान्यत्वं व्याप्यवृत्तित्वम् ।

समवायस्वसमवायिसमवेतत्वोभयसम्बन्धेन सत्ताविशिष्टत्वं भा-वत्वम् । निरुक्तसम्बन्धद्वयेन सत्ताविशिष्टान्यत्वमभावत्वम् । वेदो-क्तत्वज्ञानेन वेदविहितकर्मकारित्वं शिष्टत्वं । यत्सत्वे यत्सत्वमन्व-यः यदभावे यदभावो व्यतिरेकः प्रथमद्वितीययत्पदे कार्यकारण त्वाभ्यामभिमतपरे । स्वेतरयावत्कारणसामग्रीसमवहितस्वाधिकरण-वृत्त्यत्यन्ताभावप्रतियोगिकार्यकत्वमन्वयव्यभिचारः । कार्याधिकरण-वृत्त्यत्यन्ताभावप्रतियोगित्वं व्यतिरेकव्यभिचारः । भावनान्यो यो-वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वेसति गुरुत्वाजलद्रवत्वा-न्यगुणत्वं विशेषगुणत्वं । रूपस्पर्शान्यत्वेसति द्रव्यविभाजकोपाधि व्याप्यतावच्छेदकसंयोगाविभागद्रवत्वावृत्तिजातिशून्यगुणत्वं सामान्य-गुणत्वम् ॥

कारणतावच्छेदकधर्मवत्त्वं स्वरूपयोग्यत्वरूपं कारणत्वं । स्व

जनकत्वसम्बन्धेन फलविशिष्टत्वं फलोपधानरूपं कारणत्वं । उत्तर. कालीनकृतिसाध्यत्वप्रकारकज्ञानजनकशब्दः प्रतिज्ञा । प्रति. योगिव्यधिकरणतदभावाभाववत्त्वं तदुपलक्षितत्वं । आश्रयत्वसम्ब- न्धेन विशेषणवत्त्वं तद्विशिष्टत्वं । कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यता निरूपितकारणताश्रयत्वमसाधारणकारणत्वं : कार्यत्वावच्छिन्नकार्य तानिरूपितकारणताश्रयत्वं साधारणकारणत्वं । अनुक्तस्य पदस्य प्र कृतशाब्दबोधोपयोगित्वेनानुसन्धानमध्याहारः । पूर्वोक्तपदस्य प्रकृत. शाब्दबोधोपयोगित्वेनानुसन्धानमनुषङ्गः। स्वप्रतियोगिवृत्तित्वस्वानुयोगि वृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यद्रव्यविभाजकोपाधिमत्त्वमाकाश. तैकत्वं।प्रतियोगिवैयधिकरण्यंचप्रतियोग्यधिकरणावृत्तित्वरूपमेकं।प्रतियो ग्यनधिकरणवृत्तित्वरूपमपरं। विशिष्टाभावोभयाभावादिकमादायप्रसक्त स्यासम्भवस्यवारकंव्यापकत्वंतदधिकरणवृत्त्यत्यन्ताभावीयवैशिष्ट्यव्यास ज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताशून्यत्वरूपमेकं स्वानधिकरणतदधि. करणवृत्त्यत्यन्ताभावप्रतियोगियद्यत्स्वंतद्भिन्नत्वरूपमपरं । स्वपदं त दधिकरणवृत्त्यत्यन्ताभावप्रतियोगिपरम् । क्षणे क्षणव्यवहितोत्तरत्वञ्च स्वध्वंसाधिकरणक्षणध्वंसानाधिकरणत्वेसति स्वध्वंसाधिकरणत्वं । क्ष णेक्षणाव्यवहितपूर्वत्वञ्च स्वप्रागभावाधिकरणक्षणप्रागभावानाधिकरणत्वे सति स्वप्रागभावाधिकरणत्वं । ज्ञानादौ ज्ञानाद्यव्यवहितोत्तरक्षणवृ त्तित्वञ्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणीभूतस्स्वाधि करणक्षणध्वंसाधिकरणीभूतश्च यो क्षणः तद्वृत्तित्वरूपं ग्राह्यम् । एवमेव ज्ञानादौ ज्ञानाद्यव्यवहितपूर्ववृत्तित्वमपि ग्राह्यं। अतीतत्वं वर्त मानध्वंसप्रतियोगित्वम् । वर्तमानत्वंच शब्दप्रयोगाधिकरणकालवृ. त्तित्वम् । अनागतत्वंच वर्तमानप्रागभावप्रतियोगित्वम् । एकपद. निष्ठमपरपदपर्यायत्वंच अपरपदशक्यतावच्छेदकरूपेण शक्याऽपर. पदशक्यबोधकत्वम् । अकथनानुमिताबोधकतावच्छेदकीभूतं

ग्रन्थनिष्ठं न्यूनत्वं । स्वरूपसमवायोभयघटितसामानाधिकरण्यंनाम स्वनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितस- मवायसम्बन्धावच्छिन्नवृत्तित्वरूपम् । अकथनानुमितावोधकत्ववत्पुरु- षत्वं ग्रन्थकर्तृनिष्ठं न्यूनत्वं । ज्ञाननिष्ठप्रामाण्यं तद्वति तत्प्रकारक त्वरूपम् । भूतत्वं च बहिरिन्द्रियजन्यप्रत्यक्षविषयविशेषगुणवत्त्वम् । क्रियाश्रयत्वं मूर्तत्वम् । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं । तद्धर्माव- च्छिन्नशक्तत्वेसति तद्धर्मबोधकत्ववान् शब्दः स्वारसिकतत्पदजन्य- शाब्दबोधीयविशेष्यतावच्छेदकमुख्यविशेष्यकज्ञानजनकशब्दोवा भा- वप्रधाननिर्देशः । संख्यात्वव्याप्यधर्मावच्छिन्नप्रकारकनिश्चयाविषयत्व- मसङ्ख्याकत्वं तदेवानन्तत्वमुच्यते । तदविषयकप्रतीत्यविषयत्वं तद्घ टितत्वं । तद्विषयताव्यापकविषयताकत्वं तद्घटकत्वम् । समासार्थ- बोधकवाक्यत्वं विग्रहत्वम् ।

साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमितिवा साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरू पावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वमितिवा, स्वावच्छेदक- ताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदक- तात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व मिति वा साध्यतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशप्रकारो विज्ञेयः ।

साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमितिवा, साध्यताव- च्छेदकताप्रतियोगिक पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिता- कस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक त्वमितिवा, स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताव च्छेदकत्वसम्बन्धेन साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगिताव च्छेदकरूपवृत्तित्वमितिवा साध्यतावच्छेदकतातिरिक्तवारकपर्याप्तिनिवेशप्र- कारो ज्ञेयः ।

साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वेसति साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमितिवा साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताक स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्ति प्रतियोग्यवच्छेदकत्वमितिवा स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमितिवा, साध्यतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयनिवेशप्रकारो ग्राह्यः ॥

साध्यतानिरूपितसंसर्गतावच्छेकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वमितिवा, साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नाननुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकत्वमितिवा, स्वानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमितिवा, साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशप्रकारो ग्राह्यः ॥

साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्न संसर्गताकत्वमितिवा, साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नाननुयोगिताकस्वानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वमितिवा स्वानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमितिवा, साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्तिनिवेशप्रकारो ग्राह्यः ॥

साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वेसति साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वमितिवा, साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नाननुयोगिताकस्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्व मितिवा, स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमितिवा, साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनतरवारकपर्याप्तिद्वयनिवेशप्रकारो ग्राह्यः ॥

एवमेव हेतुतावच्छेदकत्वादिन्यूनतरवारकपर्याप्तिनिवेशप्रकारोऽपि ग्राह्यः । तथाच सम्बन्धावच्छिन्नास्वाधेयताप्रभृतिषु तत्तद्दोषवारणाय निरुक्तविधपर्याप्तिनिवेशः कार्य इति सिद्धम् ॥

—•चक्षुर्ग्राह्यपदार्थनिरूपणम्•—

महत्वोद्भूतरूपालोकसंयोगविशिष्टद्रव्याणि तदभावाः तादृशद्रव्यवृत्तिजातयः तदभावाः तादृशद्रव्यवृत्त्युद्भूतरूपसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहाः तदभावाः तादृशगुणवृत्तिजातयः तदभावाः तादृशद्रव्यवृत्तिकर्म तदभावः तज्जातिः तदभावः तादृशद्रव्यवृत्तिसमवायः तदभावः तद्धर्मः तदभावः एते चक्षुरिन्द्रियेण गृह्यन्ते । अमुमेवार्थं येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनेन्द्रियेण तन्निष्ठाजातिः स्तदभावश्च गृह्यत इति न्यायो बोधयति ॥

—•त्वागिन्द्रियग्राह्यपदार्थनिरूपणम्•—

महत्वोद्भूतरूपोद्भूतस्पर्शविशिष्टानि द्रव्याणि तदभावाः

तज्जातयः तदभावाः रूपरूपत्वरूपाभावभिन्नं चाक्षुषप्रत्यक्षाविषयी-भूतं सर्वमपि त्वगिन्द्रियग्राह्यं भवति स्पर्शतदभावौ तज्जातितदभा-वौच त्वगिन्द्रियेण गृह्यन्त इति विशेषः ॥

—रसनेंद्रियग्राह्यपदार्थनिरूपणम्—

महत्वसमानाधिकरणरसाः तदभावाः तज्जातयः तदभावाः समवायः तदभावः तद्धर्मः तदभावः एते रसनेंद्रियेण गृह्यन्ते॥

—घ्राणेंद्रियग्राह्यपदार्थनिरूपणम्—

महत्वसमानाधिकरणगन्धाः तदभावाः तज्जातयः तदभावाः समवायः तदभावः तद्धर्मः तदभावः घ्राणेंद्रियेण गृह्यन्ते ॥

—श्रोत्रेंद्रियग्राह्यपदार्थनिरूपणम्—

शब्दाः तदभावाः तज्जातयः तदभावाः समवायश्च श्रोत्रें-द्रियेण गृह्यन्ते ॥

—मनोग्राह्यपदार्थनिरूपणम्—

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः तदभावाः तज्जातयः तदभा-वाः जीवः तदभावः मनइन्द्रियेण गृह्यन्ते येनेंद्रियेणेति नियम एव तत्तदिंद्रियाणां तत्तत्पदार्थग्राहकत्वमस्तीति सूचयति ॥

तथाच चाक्षुषप्रत्यक्षंप्रति महत्वोद्भूतरूपालोकसंयोगचक्षु स्सन्निकर्षाणां चतुर्णां कारणत्वं, अणुत्वपरिमाणवतां परमाणूनां अनुद्भूतरूपवतां इन्द्रियाणां अन्धकारस्थितानां चक्षुस्संयोगरहिता नाञ्च पदार्थानां चाक्षुषवारणाय क्रमेण महत्वादीनां चतुर्णां कारण त्वमङ्गीकार्यम् ॥

त्वाचप्रत्यक्षंप्रति महत्वोद्भूतरूपत्वक्संयोगानां त्रयाणां का-

रासनप्रत्यक्षंप्रति महत्वरसनेंद्रियसन्निकर्षयोः द्वयोरेव कारणत्वं वाच्यम् ॥

घ्राणजप्रत्यक्षंप्रति महत्वघ्रणेन्द्रियसन्निकर्षयोः द्वयोरेव कारणत्वं वाच्यम् ॥

श्रावणप्रत्यक्षेऽपि महत्वश्रोत्रेंद्रियसन्निकर्षयोः द्वयोरेव हेतुत्वं॥

मानसप्रत्यक्षे महत्वात्ममनस्सन्निकर्षयोः द्वयोरेव हेतुत्वं ज्ञेयं ॥

महत्वंतु षड्विधोऽपि प्रत्यक्षे हेतुरेव । अयमेवार्थो "महत्वं षड्विधे हेतुरित्यादिना विश्वनाथपञ्चाननभट्टाचार्येण निरूपितः॥ द्रव्यविषयकप्रत्यक्षे महत्वस्य समवायसम्बन्धेन द्रव्यसमवेतविषयकप्रत्यक्षे तस्य स्वसमवायिसमवेतत्वसम्बन्धेन द्रव्यसमवेतसमवेतविषयकप्रत्यक्षे तस्य स्वसमवायिसमवेतसमवेतत्वसम्बन्धेन च हेतुत्वं ज्ञेयम् ॥

एवमेवोद्भूतरूपालोकसंयोगचक्षुरादीन्द्रियाणामपि प्रत्येकं हेतुत्वं ज्ञेयम् । शब्दप्रत्यक्षे श्रोत्रसमवायस्य प्रतियोगितासम्बन्धेन हेतुत्वम् । शब्दत्वप्रत्यक्षे श्रोत्रसमवेतसमवायस्य तेनैव सम्बन्धेन हेतुत्वं ज्ञेयम् ॥

## —•अभावनिरूपणम्•—

अत्यन्ताभावो बहुविधः समान्याभावः विशेषाभावः विशिष्टाभावः उभयाभावः त्रितयाभावप्रभृतयः अन्यतराभावः समुदायाभावः प्रत्येकाभाव इत्यादिना । द्रव्यमादाय क्रमेणाभावाः दृष्टान्तपुरस्सरं प्रदर्श्यन्ते । आद्यः गुणे द्रव्यं नास्तीति प्रतीतिसिद्धाभावः। द्वितीयः भूतले घटाभावः। तृतीयः भूतले पूर्वक्षणवृत्तित्वविशिष्टद्रव्याभावः। चतुर्थः भूतले द्रव्यगुणत्वोभयाभावः । पञ्चमः द्रव्यगुणत्वकर्मत्वत्रितयाभावः । षष्ठः गुणे द्रव्यगुणोन्यतराभावः ।

सप्तमः गुणे द्रव्यगुणगुणत्वकर्मकर्मत्वसमुदायाभावः । अष्टमः गुणे द्रव्याभावः गुणाभावः कर्माभावः कर्मत्वाभावादयः ॥

अन्योन्याभावोपि बहुविधः सामान्यभेदः विशेषभेदः विशिष्टभेदः उभयभेदादिः अन्यतरभेदः समुदायभेदः प्रत्येकभेद इत्यादिना । आद्यः गुणे द्रव्यं नेति भेदः । द्वितीयः गुणे घटो नेति प्रतीतिसिद्धभेदः । तृतीयः भूतलवृत्तित्वविशिष्टद्रव्यभेदः । चतुर्थः द्रव्यगुणोभयभेदादिः । पञ्चमः द्रव्यगुणान्यतरभेदः षष्ठः द्रव्यगुणकर्मसमुदायभेदः । सप्तमः द्रव्यभेदः गुणभेदः कर्मभेदश्च । भविष्यतीति प्रतीतिविषयः प्रागभावः । ध्वस्तो नष्ट इति प्रतीतिविषयः प्रध्वंसाभावः । नास्तीति, प्रतीतिविषयः अत्यन्ताभावः । नभवतीति प्रतीतिविषय अन्योन्याभावः । नास्तिपदाभिलापस्थलएवात्यन्ताभावो बोध्यते । परंतु तादात्म्यसम्बन्धेन नास्तीत्यत्र नास्तिपदप्रयोगोप्यन्योन्याभावएव बोध्यते । भूतले न घट इत्यत्र नास्तिपदप्रयोगाभावेपि सप्तम्यन्तानुयोगिवाचकपदसमाभिव्याहृतनञ अत्यन्ताभावार्थकत्वमिति नियमेन अत्यन्ताभावएव बोध्यते । संयोगसम्बन्धेन द्रव्यत्वाभावः व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभाव अयंच केवलान्वयी । सैान्दलमते घटत्वेन पटो नास्तीत्याकारकप्रतीतिसिद्धाभावः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः । घटत्वेन पटवा नेत्याकारकप्रतीतिसिद्धभेदः व्यधिकरणधर्मावच्छिन्नावच्छेदकताप्रतियोगिताकभेदः । द्रव्यत्वेन घटो नास्तीत्याकारकप्रतीतिसिद्धाभावः सामान्यरूपेण विशेषाभावः । घटत्वेन द्रव्यं नास्तीत्याकारकः विशेषरूपेण सामान्याभावश्च अङ्गीक्रियते । वह्नित्वेन तार्णातार्णदहनोभयं नास्ति घटत्वेन घटपटोभयं नास्तीत्यादिप्रतीतिसिद्धा अन्ये बहुविधाऽभावा अपि अङ्गीकृताः॥

## वृत्तिनियामकसम्बन्धनिरूपणं

संयोगसम्बन्धः समवायसम्बन्धः कालिकसम्बन्धः स्वरूप सम्बन्धः दिक्कृतविशेषणतासम्बन्धः पर्याप्तिसम्बन्धः स्वाभाववद्वृत्तित्वसम्बन्धप्रभृतयः वृत्तिनियामकसम्बन्धाः। वृत्तिनियामकत्वञ्च वृत्तितावच्छेदकत्वम्। तच्च तेन सम्बन्धेन तद्वानिति प्रतीतिनिबन्धनम। द्रव्ययोरवयवावयविभिन्नयोः संयोगः सम्बन्धः। अयुतसिद्धयोः समवायः सम्बन्धः। अयुतसिद्धाश्च अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्येच। सवर्स्य पदार्थस्य काले वर्तमानत्वे कालिकः सम्बन्धः अत्रच सर्वाधारः काल इति नियमो नियामकः। जन्ये पदार्थसत्त्वेपि कालिके एव सम्बन्धः तत्र जन्यानां कालोपाधित्वमितिनियमो नियामकः। नित्येषु कालिकायोग इति नियमेन नित्यपदार्थेषु नकोऽपि पदार्थः कालिकसम्बन्धेन वर्तते। विभिन्नकालीनयोः विषयत्वान्यसम्बन्धेन आधाराधेयभावविरह इति नियमेन जन्येष्वपि भिन्नकालिकाः पदार्थाः न कालिकसम्बन्धेन वर्तन्ते। भिन्नकालिकयोरपि आधाराधेयभावः आगामिपदार्थविषयकज्ञानानुरोधेन अङ्गीक्रियते॥

निरूपककोटिप्रविष्टा अभावप्रभृतयः द्रव्यादिपञ्चकभिन्नाः स्वरूपसम्बन्धेन आश्रयेषु वर्तन्ते तथाच द्रव्यादिपञ्चभिन्नानां आश्रयेषु वर्तमानत्वे स्वरूपसम्बन्धएव सम्बन्ध इति फलितम्। मूर्तानां दिगुपाधित्वमिति नियमेन मूर्तेषु नित्येष्वनित्येषुच दिक्कृतविशेषणतासम्बन्धेन पदार्थाः वर्तन्ते। उभयत्वत्रित्वादिपरार्थपर्यन्तासङ्ख्या अवच्छेदकताश्च पर्याप्तिसम्बन्धेनापि आश्रयेषु वर्तन्ते। उभयत्वादिव्यासज्यवृत्तिधर्मा उभयत्वाद्यवच्छेदेनैव पर्याप्तिसम्बन्धेन आश्रयेषूभयप्रभृतिषु वर्तन्ते। अवच्छेदकतास्तु उभयत्वाद्यवच्छेदेन एकत्वावच्छेदेनच आश्रयेषु वर्तन्त इतीयान् भेदः उभयत्वा.

दीनां अवच्छेदकतानां च वर्तते । केचित्तु विषयताया अपि पर्याप्तिमङ्गीकुर्वन्ति । आर्द्रेन्धनसंयोगरूपोपाधेः धूमवान् वह्नेरित्यत्र वह्निरूपहेतौ स्वाभाववद्वृत्तित्वसम्बन्धेन वर्तते । यद्वैशिष्ट्यं यत्र भासते स एव स्वपदार्थइति नियमेन स्वपदेनार्द्रेन्धनसंयोगस्य परिग्रहणे स्वाभाववदयोगोलकं तद्वृत्तित्वं वह्नौ वर्तत इति । सम्बन्धमात्रं किञ्चित्प्रतियोगिकं किञ्चिदनुयोगिकं च । आधेयाः प्रतियोगिनः आधारा स्त्वनुयोगिनः ॥

## —वृत्त्यनियामकसम्बन्धनिरूपणम्—

ते च निरूपककोटिप्रविष्टाः कार्यताप्रभृतयः परम्परासम्बन्धाश्च एते च स्वसामानाधिकरण्यस्वसमानकालीनत्वादयः एवमेवान्येपि ग्राह्याः । वृत्त्यनियामकत्वंच वृत्तितानवच्छेदकत्वं तच्च तेन सम्बन्धेन तद्वानिति प्रतीत्यभावनिबन्धनम् ॥

## —लक्षणदोषनिरूपणम्—

अतिव्याप्तिः अव्याप्तिः असम्भवश्च आत्माश्रयः अन्योन्याश्रयः चक्रकापत्तिरित्यते लक्षणदोषाः । अलक्ष्ये लक्षणसत्त्वमतिव्याप्तिः यथा गोःश्रृङ्गित्वं लक्षणमुक्तंचेद्गोभिन्नमाहिषादावपि श्रृंगित्वस्य सत्वादतिव्याप्तं भवति । केषुचिल्लक्ष्येषु लक्षणासत्वमव्याप्तिः, यथा गोः कपिलरूपवत्वं लक्षणमुक्तंचेत्कपिलरूपवत्त्वलक्षणस्य श्वेतगव्यभावादव्याप्तं लक्षणम् । लक्ष्यमात्रे कुत्रापि लक्षणासत्वमसम्भवः यथा गोरेकशफवत्त्वं लक्षणमुक्तंचेत्तस्य लक्ष्यभूते गोसामान्ये कुत्राप्यभावादसम्भवि तल्लक्षणम् । स्वग्रहाधीनस्वग्रहाविषयत्वं आत्माश्रयः । स्वग्रहाधीनग्रहाधीनस्वग्रहविषयत्वमन्योन्याश्रयः । स्वग्रहाधीनग्रहाधीनग्रहाधीनस्वग्रहविषयत्वं चक्रकापत्तिः । दोषत्वंच दुष्टताप्रयोजकत्वम् ॥

—हेतुदोषनिरूपणम्—

व्यभिचारः, विरोधः, सत्प्रतिपक्षः, आश्रयासिद्धिः, स्वरूपासिद्धिः, व्याप्यत्वासिद्धिः, बाधः, सिद्धसाधनं, अर्थान्तरं, भागासिद्धिः, साध्याप्रसिद्धिः, साधनाप्रसिद्धिप्रभृतयो हेतुदोषाः। साध्याभाववद्वृत्तिहेतुर्व्यभिचारः नतु साध्याभाववद्वृत्तित्वमात्रं तन्मात्रस्य अनुमितिप्रतिबन्धकतातिरिक्तवृत्तिविषयताकत्वात्। साध्याभाववद्वृत्तित्वमात्रमपि हेतुनिष्ठव्यभिचारतया व्यवहरन्ति। तथापि न तस्य दोषेष्वन्तर्भावः। एवमेव निश्चितसाध्यव्यावृत्तहेतुरेवासाधारण्यं प्राचाम। नवीनास्तु साध्यासमानाधिकरणहेतुमेवासाधारण्यं वदंति। एवमन्वयव्यतिरेकदृष्टान्तरहितहेतु रनुपसंहारित्वं प्राचीनमते, नवीनमते अत्यन्ताभावाप्रतियोगिसाध्यकत्वं तत्। साध्य व्यापकीभूताभावप्रतियोगिहेतुर्विरोधः॥

केचन एतादृशं विरोधमेवासाधारण्यं साध्यासामानाधिकरण्यमेव विरोधं चाहुः। प्राचीनमते साध्याभावव्याप्यप्रतिहेतुमत्तापरामर्शकालीनसाध्यव्याप्यप्रकृतहेतुमत्तापरामर्शविषयत्वं सत्प्रतिपक्षदोषः। नवीनमते साध्याभावव्याप्यवत्पक्षस्सत्प्रतिपक्षः। पक्षतावच्छेदकाभाववत्पक्ष आश्रयासिद्धिः। हेत्वभाववत्पक्षः स्वरूपासिद्धिः। साध्याभाववद्वृत्तित्वाभाववद्धेतुः व्याप्यत्वासिद्धिः। साध्याभाववत्पक्षो बाधः। पक्षे साध्यनिश्चयः सिद्धसाधनं। अनाभिमतार्थसिद्धिरर्थान्तरं। पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावोऽभागासिद्धिः। साध्यतावच्छेदकाभाववत्साध्यं साध्याप्रसिद्धिः। साधनतावच्छेदकाभाववत्साधनं साधनाप्रसिद्धिः। हेतुघटकविशेषणानां व्यभिचारवारकतया साध्यघटकविशेषणानामर्थान्तरासिद्धसाधनादिवारकतयापक्षघटकविशेषणानामपि कचिदाश्रयासिद्धिसिद्धसाधनादिवारकतयाकचित्स्वोद्भावनीयदोषसङ्गमनफलकत्वेनचसार्थक्यं॥

—•सर्वेषां व्यवहार्यपदार्थानां सप्तपदार्थेष्वन्तर्भावप्रकारः•—

तमः प्रौढप्रकाशकतेजस्सामान्याभावरूपः । सादृश्यस्य तद्भिन्नत्वेसति तद्गतभूयोधर्मरूपतया तच्च साधारणधर्मेन्तर्भवति । अतः साधारणधर्मस्सप्तपदार्थान्तर्भूत एव । स्वरूपसम्बन्धः स्थलभेदेन प्रतियोग्यनुयोगिनोरन्तर्भावमुपैति । निरूपककोटिप्रविष्टाः कार्यताप्रभृतयः अधिकरणरूपतां भजन्ते यथा कार्यत्वं कार्यरूपं विषयत्वं विषयरूपं । कालिकादिकृतविशेषणतासम्बधौ अधिकरणरूपावेव । प्रतिबन्धकसद्भावासद्भावाभ्यामेव प्रकृतकार्योत्पत्त्यनुत्पत्त्यो र्निर्वाहे अतिरिक्तशक्ते रनभ्युपगमा च्छक्तेर्नातिरिक्तपदार्थता । लघुत्वन्तु गुरुत्वाभावरूपं । मृदुत्वकठिनत्वयोः मृदुकठिनावयवसंयोगरूपत्वेनं तयो स्संयोगेन्तर्भावः । एवमतिरिक्तत्वेन प्रतीयमानानां पदार्थानां उक्तेषु सप्तसु पदार्थेष्वेवान्तर्भावः नपुनः पृथग्भूततेति ध्येयम् ॥

—•भावरूपाभावनिरूपणम् •—

घटाभावाभावो घटस्वरूपः । घटाभाववद्भेदोऽपि घटस्वरूपः समनैयत्यात् । घटभिन्नभेदो घटत्वरूपः । घटभेदाभावो घटत्वरूपः । घटवद्भेदाभावो घटस्वरूपः । घटवृत्तिर्नास्तीति प्रतीतिसिद्धाभावो घटत्वस्वरूपः सच अभावः घटनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववतः स्वरूपेण नास्तीत्याकारकप्रतीतिसिद्धाभावः । घटध्वंसप्रागभावः घटप्रागभावध्वंसश्च घटस्वरूपएव । घटपटान्यतराभावाभावस्य घटपटान्यतररूपतया अन्यतरान्तर्गतघटरूपत्वमपि सम्भवति । घटपटकुड्यान्यतमाभावाभावस्य घटपटकुड्यान्यतमस्वरूपतया अन्यतमान्तर्गतघटरूपत्वमपि सम्भवति । एषां चाभावानां भावरूपत्वस्वीकारे तद्भावाभावयो स्समनैयत्यमेवा.

तिप्रसङ्गानापादकताविशिष्टं प्रयोजकमिति पर्यवस्यति । पूर्वक्षण-वृत्तित्वविशिष्टघटाभावाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटरूपतया विशिष्टं शुद्धान्नातिरिच्यतइति न्यायेन पूर्वक्षणवृत्तित्वविशिष्टघटस्य शुद्धघटस्यैचक्यात् । पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावोपि घटरूप एव । जलवृत्तित्वविशिष्टो यः पटाभावः तदभावस्य घटे सत्त्वेन अभावप्रतियोगिकाभावस्याधिकरणरूपत्वाङ्गीकर्तृमते जलवृत्तित्वविशिष्टपटाभावाभावोपि घटरूपएव । अनयोरभावयोः भावसमनैयत्या-भावोपि भावरूपत्वमेवाङ्गीकृतं कैश्चित् । एतन्मते प्रसक्तातिप्रसङ्गाः तत्तदभावाधिकरणत्वाभावेनैव वारणीयाः । घटाभावस्तद्ज्ञानरूपः तद्ज्ञानकालस्वरूपः आधिकरणरूप इति च केचन मन्यन्ते, तन्मते ज्ञानकालातींद्रियाधिकरणानां चक्षुरादिग्रहणायोग्यतया घटाभावस्यापि चक्षुराद्यग्राह्यत्वप्रसङ्गरूपा अतिप्रसक्तयो दुर्वाराः ॥

—•ज्ञायमानस्य कारणत्वप्रतिबन्धकत्वनिरासः•—

यदि ज्ञायमानं लिङ्गं अनुमितिकरणं तदा धूलीपटले धूम-त्वभ्रांतिमतो वह्निव्याप्यधूमवानयमिति परामर्शाध्धूलीपटलं धूमत्वे-नावगाहमानादनुमितिर्नस्यात् । तदा लिङ्गज्ञानसत्वेपि ज्ञायमानलि-ङ्गस्याभावात् । कारणाभावात्कार्याभावस्य सर्वसम्मतत्वात् । एव-मेव ज्ञायमानं पदं यदि शाब्दधीहेतुः तदा मैनिश्लोकादितश्शा-ब्दबोधानुपपत्तिः, तदानीं कण्ठताल्वाद्यभिघातसंयोगजन्यध्वनिविशेष-रूपस्य ज्ञायमानशब्दस्याभावात । एवमेव ह्रदे वह्निभ्रांतिसत्त्वे तया-च भ्रान्त्या ह्रदो वह्न्यभाववानिति ज्ञानं प्रतिबध्यते । यदि ज्ञा-यमानस्य प्रतिबध्धकता तदा ज्ञायमानस्य वह्नेः ह्रदेऽभावात् तद्ज्ञानस्याप्रतिबध्यत्वापत्तिः । एवमेव स्थलविशेषेषु ग्राह्यम् । सर्वत्रापि निश्चयस्यैव प्रतिबन्धकत्वकारणत्वयोरङ्गीकारे घटादिकंप्र-ति स्वरूपतः कारणानां दण्डकुलालसलिलादीनां निश्चयभिन्नानां

कारणत्वभङ्गः दाहादिकंप्रति स्वरूपतः प्रतिबंधकानां मण्यादीनां निश्चयभिन्नानां प्रतिबंधकत्वभङ्गश्चेति । न शङ्कनीयम् । नास्माभिस्सर्वत्र ज्ञानस्यैव कारणत्वमुच्यते किन्तु ज्ञानस्य कारणताप्रसक्तिस्थले ज्ञायमानस्य तन्निषिद्ध्यते । अतः ज्ञायमानस्यच न कारणत्वप्रतिबन्धकत्वे सम्भवतः किंतु ज्ञानस्यैव ते सम्भवत इति सिद्धान्तः ।

## —कार्यकारणभावविचारः—

यत्सत्वे यत्सत्वमित्यन्वयः । यदभावे यदभावइति व्यतिरेकश्च कार्यकारणभावं ग्राहयतः । सर्वत्र कार्यकारणयोस्सामानाधिकरण्यमावश्यकम् । समवाय्यसमवायिकारणस्थलयोस्समवायिकारणान्तर्भावेणोभयोः सामानाधिकरण्यं सम्भवतीति ज्ञेयम् । सर्वत्र समवायिकारणस्थले समवायसम्बन्धेन जायमानघटादिकार्यं प्रति तादात्म्यसम्बन्धेन कपालादिसमवायकारणानां कारणत्वं वक्तव्यं । अतः समवायिकारणस्थले समवायसम्बन्धएव कार्यतावच्छेदकसम्बन्धः तादात्म्यसम्बन्धएव कारणतावच्छेदकसम्बन्धश्चभवतः॥

प्रथमासमवायिकारणस्थले समवायसम्बन्धेन जायमानघटादि कार्यंप्रति समवायसम्बन्धेनैव कपालसंयोगादिरूपासमवायिकारणस्य कारणत्वमित्यसमवायिकारणस्थले कार्यतावच्छेदकः कारणतावच्छेदकोपि सम्बन्धस्समवायएव ।

द्वितीयासमवायकारणस्थले समवायसम्बन्धेन जायमानघटरूपादिकार्यंप्रति स्वसमवायिसमवेतत्वसम्बंधेन कपालादिरूपस्य कारणत्वं घटाद्यन्तर्भावेण सामानाधिकरण्यंच बोध्यम ।

परन्तु निमित्तकारणानां वहुविधत्वेन कार्यकारणभेदेन कार्यतावच्छेदककारणतावच्छेदकसम्बंधभेदः । यथा समवायसम्बंधेन

जायमानघटंप्रति स्वजन्यभ्रमिजन्यभ्रमिवत्त्वसम्बंधेन दण्डस्य कारणत्वं उभयोः कपालांतर्भावेण सामानाधिकरण्यं ।

विषयतासम्बंधेन जायमानघटादिप्रत्यक्षंप्रति तादात्म्यसम्बंधेन घटादिविषयस्य कारणत्वम् । अत्रच विषयांतर्भावेण सामानाधिकरण्यम् ।

प्रतियोगितासम्बंधेन जायमानघटादिध्वंसंप्रति तादात्म्यसंबंधेन घटादिप्रतियोगिनां कारणत्वं प्रतियोग्यंतर्भावेण सामानाधिकरण्यम् ।

विषयतासंबंधेन जायमानद्रव्यविषयकचाक्षुषप्रत्यक्षंप्रति महत्त्वोद्भूतरूपालोकसंयोगचक्षुस्संयोगानां समवायसंबंधेन कारणत्वं विषयांतर्भावेण सामानाधिकरण्यम् ।

समवायसंबंधेन जायमानानुमितित्वावच्छिन्नंप्रति समवायसंबंधेन परामर्शस्य कारणत्वं आत्मांतर्भावेन सामानाधिकरण्यम् ।

एवमेव समवायसंबंधेन जायमानोपमितिशाब्दबोधौ प्रति सादृश्यज्ञानपदज्ञानयोस्समवायसंबंधेन हेतुत्वं आत्मांतर्भावेण सामानाधिकरण्यम् ।

विषयतासंबंधेन जायमानबाह्यद्रव्यप्रत्यक्षंप्रतींद्रियस्य संयोगसंबंधेन हेतुत्वं विषयांतर्भावेण सामानाधिकरण्म् ।

एवमेवात्मनि वर्तमानानां गुणानां परस्परं कार्यकारणभावे प्राप्ते उभयत्रापि समवायसंबंधेनात्मांतर्भावेण हेतुत्वं ज्ञेयम् ॥

मङ्गलं त्रिविधं ज्ञानात्मकं शब्दात्मकं क्रियात्मकञ्चेति ॥

तत्र स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासंबंधेन जायमानसमाप्तित्वावच्छिन्नंप्रति समवायसंबंधेन ज्ञानात्मकमङ्गलस्य कारणत्वं आ

त्मान्तर्भावेण सामानाधिकरण्यम् ॥

स्वरूपसम्बन्धेन जायमानसमाप्तिंप्रति समवायसम्बन्धेन गग नान्तर्भावेण शब्दात्मकमङ्गलस्य हेतुत्वं बोध्यम् ॥

स्वप्रतियोगिचरमवर्णानुकूककृतिमदवच्छेदकतासम्बन्धेन जाय. मानसमाप्तिंप्रति समवायसम्बन्धेन क्रियात्मकमङ्गलस्य शरीरान्तर्भा वेण हेतुत्वं बोध्यम् ॥

स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन जायमानसमा. प्तित्वावच्छिन्नंप्रति स्वजन्यविघ्नध्वंसवत्तासंबंधेन सर्वेषां मङ्गलानां कारणत्वं आत्मांतर्भावेण सामानाधिकरण्यमवधेयम् ॥

स्वरूपसम्बन्धेन जायमानदाहत्वावच्छिन्नंप्रति संयोगसम्बन्धे. न वह्नेरिन्धनांतर्भावेण कारणत्वं बोध्यम् ॥

कालिकसंबंधेन जायमानकार्यंप्रति तादात्म्यसंबंधेन कालस्य कालांतर्भावेण कारणत्वं बोध्यम् ।

स्वानुकूलकृतिमत्वसंबंधेन जायमानकार्यंप्रति ईश्वरस्य तादा. त्म्यसंबंधेन कारणत्वं ईश्वरान्तर्भावेण सामानाधिकरण्यम् ॥

स्वाश्रयसंयोगिसंयुक्तत्वसंबंधेन जायमानकार्यंप्रति समवायेना. दृष्टस्य कारणत्वं आत्मांतर्भावेण सामानाधिकरण्यम् ॥

प्रतिबन्धकसत्त्वदशायां कार्योत्पत्त्यापत्तिवारणाय कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वं वाच्यम् कार्योत्पत्त्यनन्तरं पुन स्तत्कार्योत्पत्त्यापत्तिवारणाय कार्यप्रागभावस्यच हेतुत्वम् ॥

कार्यमात्रे प्रतिबन्धकाभावस्य लौकिकप्रत्यक्षे विषयस्यच का र्यसहभावेन कारणत्वं वक्तव्यम् । अन्यथा कार्यकाले प्रतिबन्ध कसत्वेपि कार्योत्पत्त्यापत्तिः प्रत्यक्षकाले विषयाभावेपि लौकिकप्र. त्यक्षोत्पत्त्यापत्तिरित्यादिकं ग्राह्यम् ॥

—॰प्रतिबध्यप्रतिबन्धकभावविचारः॰—

तद्वत्ताबुद्धिंप्रति तदभाववत्तानिश्चयः, तदभावव्याप्यवत्तानिश्चयः, तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयश्च प्रतिबन्धकः, आद्यः ह्रदो वह्निमानिति बुद्धिंप्रति प्रतिबन्धकः वह्न्यभाववानिति निश्चयः, द्वितीयः वह्न्यभावव्याप्यवानिति निश्चयः, तृतीयः वह्न्यभाववज्जलविषयकनिश्चयविशिष्टजलवध्ध्रदनिश्चयः, तादृशश्च निश्चयः वह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रदइति निश्चयरूपः जलवान्वह्न्यभाववान् जलवान् ह्रदइत्यादि समूहालम्बननिश्चयरूपः जलवान् वह्न्यभाववानिति निश्चयविशिष्टजलवान् ह्रदइति निश्चयरूपश्च भवति ॥

सन्निकर्षो द्विविधः, लौकिकसन्निकर्षः, अलौकिकसन्निकर्षश्चेति, आद्यः संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणविशेष्यभावश्चेति षड्विधः । द्वितीयस्त्रिविधः, सामान्यलक्षणो ज्ञानलक्षणो योगजलक्षणश्चेति, एतदुदाहरणानि पूर्वमुक्तानि ॥

प्रतिबध्यतावच्छेदकन्तु लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिबुद्धित्वमेव, नतु प्रत्यक्षत्वानुमितित्वोपमितित्वशाब्दबुद्धित्वनिश्चयत्वस्मृतित्वयथार्थानुभवत्वायथार्थानुभवत्वादिकं किमपि, प्रत्यक्षत्वाद्यवच्छिन्नंप्रति प्रतिबन्धकत्वस्वीकारे अनुमित्यादीनां प्रतिबध्यतावच्छेदकधर्माक्रान्तत्वाभावे न प्रतिबन्धकसत्त्वदशायामपि अनुमित्यादीनामुत्पत्तिप्रसङ्गः । तत्तद्धर्मावच्छिन्नंप्रति पृथक्पृथक्प्रतिबन्धकत्वस्वीकारे गौरवप्रसङ्गः, अतस्तादृशबुद्धित्वमेव प्रतिबध्यतावच्छेदकत्वं वक्तव्यम् । प्रतिबन्धकतावच्छेदकन्तु अनाहार्याप्रामाण्यज्ञानानास्कन्दिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभा-

वत्वावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वमे व, नतु ज्ञानत्वादिकं किमपि, ज्ञानत्वादेः प्रतिबन्धकतावच्छेद. कत्वे संशयादिदशायामपि तद्वत्ताबुद्धेः प्रतिबध्यत्वप्रसङ्गः अतस्ता दृशनिश्चयत्वमेव प्रतिबन्धकतावच्छेदकमिति वक्तव्यम् ।

मणिमन्त्रादिन्यायेनचैक प्रतिबन्धकत्वमस्ति, नतत्र निश्च. याद्यपेक्षा, यथा स्वरूपसम्बन्धेन जायमानदाहत्वावच्छिन्नंप्रति सं. योगसम्बन्धेन मणेः प्रतिबन्धकत्वं, यथावा समवायसम्बन्धेन जाय मानघटत्वावच्छिन्नंप्रति संयोगसम्बन्धेन वृष्टेः प्रतिबन्धकत्वं, यथा वा सर्पदंशनपिशाचादिजन्यबाधांप्रति मन्त्रस्य प्रतिबन्धकत्वम् ।

मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वञ्च निश्चयत्वासमानाधिकर णप्रतिबन्धकत्वं, नचैवं सिद्धिनिष्ठस्य अनुमितित्वावच्छिन्ननिरूपि. तप्रतिबन्धकत्वस्य निश्चयत्वासामानाधिकरण्याभावेन सिद्धिनिष्ठप्र. तिबन्धकत्वे तल्लक्षणासमन्वयप्रसङ्ग इतिवाच्यम् ॥

बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वासमानाधि. करणप्रतिबन्धकत्वस्य निरुक्तप्रतिबन्धकत्वरूपत्वात्, साध्यसिद्धेर नुमितित्वावच्छिन्नंप्रत्येव प्रतिबन्धकत्वेन बुद्धित्वावच्छिन्नप्रतिबध्य- तानिरूपितप्रतिबन्धकत्वाभावेन तादृशप्रतिबन्धकत्वासमानाधिकरणप्र तिबन्धकत्वस्य तत्राक्षतत्वात्, नच साध्यसिद्धेरपि साध्यताव. च्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितपक्षताव च्छेदकावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नंप्रति ग्राह्याभाववगा हित्वेन प्रतिबन्धकतया साध्यसिद्धिनिष्ठाया अनुमितित्वावच्छिन्न प्रतिबध्यतानिरूपितप्रतिबन्धकताया अपि निरुक्तबुद्धित्वावच्छिन्नप्र. तिबध्यतानिरूपितप्रतिबन्धकतासमानाधिकरणत्वेन सिद्धौ तादृशप्र. तिबन्धकत्वासमानाधिकरणप्रतिबन्धकत्वाभावेन तत्र मणिमन्त्रादि. न्यायेन प्रतिबन्धकत्वासम्भवप्रसङ्ग इतिवाच्यम् । बुद्धित्वावच्छि.

न्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वान्यप्रतिबन्धकत्वस्यैव मणिमन्त्रा-दिन्यायेन प्रतिबंधकत्वशब्दार्थत्वात्, अनुमितित्वावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबंधकतामादाय सिद्धौ लक्षणसमन्वयसम्भ-वात्, कामिनीज्ञानान्यज्ञानत्वावच्छिन्नंप्रति कामिनीजिज्ञासायाः प्र-तिबंधकत्वं इच्छायां विषयासिद्धेः प्रतिबंधकत्वञ्च मणिमन्त्रादिन्याये न प्रतिबंधकत्वमेव ॥

नचैवमपि कामिनीजिज्ञासानिष्ठप्रतिबंधकत्वस्यापि ज्ञानत्वा-वच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकत्वान्यत्वाभावेन तत्र तल्लक्षणा-समन्वयप्रसङ्ग इतिवाच्यम्, ज्ञानत्वातिरिक्तः किञ्चिद्धर्मावच्छिन्नप्रका-रतानिरूपितविशेष्यत्वाद्यातिरिक्तश्च यो धर्मः तद्धर्मानवच्छिन्नप्रतिब-ध्यतानिरूपितप्रतिबन्धकत्वान्यप्रतिबंधकत्वस्यैव निरुक्तप्रतिबंधकत्व-शब्दार्थत्वात्। तथाच कामिनीजिज्ञासानिष्ठप्रतिबंधकतानिरूपित प्रतिबध्यताया ज्ञानत्वतादृशविशेष्यत्वाद्यातिरिक्तकामिनीज्ञानान्यत्वरूप धर्मावच्छिन्नत्वेन तादृशप्रतिबध्यतामादाय दोषप्रसक्तेरभावात् ॥

अथवा ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितनिश्चयत्वावच्छिन्नप्र-तिबंधकत्वान्यप्रतिबंधकत्वस्यैव निरुक्तप्रतिबंधकतारूपत्वं वक्तव्यं, कामिनीजिज्ञासानिष्ठप्रतिबंधकत्वस्य मणिमन्त्रादिनिष्ठप्रतिबंधकत्वा नांच निश्चयत्वावच्छिन्नत्वाभावेन साध्यसिद्धिनिष्ठप्रतिबंधकत्व-स्यानुमितित्वावच्छिन्नप्रतिबध्यतानिरूपितत्वेऽपि ज्ञानत्वावच्छिन्नप्रति-बध्यतानिरूपितत्वाभावेन विषयसिद्धिनिष्ठप्रतिबंधकत्वस्येच्छात्वा-वच्छिन्नप्रतिबध्यतानिरूपितत्वेऽपि ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपि-तत्वाभावेन च मणिमन्त्रसाध्यसिद्धिविषयसिद्ध्यादिषु निरुक्तप्रति-बन्धकत्वस्य नक्षतिः। एवमेव शब्दसाक्षात्कारादिप्रतिबंधकेषु बा-धिर्यमूकत्वदूरस्थत्वादिष्वपि निरुक्तप्रतिबंधकताभिन्नप्रतिबंधकत्वस्य नक्षतिः, नचैवमपि कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वस्य क

म्बुग्रीवादिषु स्वीकारे गौरवमिति गौरवनिश्चयस्य कम्बुग्रीवादौ निरु
क्ताभावप्रतियोगितावच्छेदकत्वज्ञानंप्रति प्रतिबंधकतया तन्निश्चये नि.
रुक्तप्रतिबन्धकताभिन्नप्रतिबन्धकताश्रयत्वस्याभावादव्याप्तिरिति वाच्यं,
तदभाववत्तानिश्चयत्वावच्छिन्नप्रतिबंधकताभिन्ना तदभावव्याप्यवत्ता.
निश्चयत्वावच्छिन्नप्रतिबंधकताभिन्ना निश्चयविशिष्टनिश्चयत्वावच्छि
न्नप्रतिबंधकताभिन्ना या प्रतिबंधकता तदाश्रयत्वस्यैव निरुक्तप्र.
तिबन्धकत्वरूपत्वेन मणिमंत्रादिषु साध्यसिद्धिविषयसिद्धिगौरवनि
श्चयमूकत्वबधिरत्वादिषु निरुक्तप्रतिबंधकताभिन्नप्रतिबंधकताश्रयत्व.
सत्वेन क्षत्यभावात् । नच साध्यसिद्धिविषयसिद्धिकामिनी.
जिज्ञासागौरवज्ञानादिषु मणिमंत्रादिन्यायेन प्रतिबंधकत्वव्यवहारो ना
स्त्येवेति वाच्यम् । शब्दरूपस्य मंत्रस्य तादृशप्रतिबंधकत्वासिद्धौ
निरुक्तज्ञानेच्छादिषु तादृशप्रतिबंधकत्वाभावे विनिगमकाभावात् ।
तथाच तदभाववत्तानिश्चयतदभावव्याप्यवत्तानिश्चयतदभावावच्छेदे
कतया गृहीतधर्मवत्तानिश्चयभिन्नानां प्रतिबंधकानां तत्तत्पदार्थप्र.
ति मणिमंत्रादिन्यायेनैव प्रतिबंधत्वमङ्गीकार्यम् ॥

यदिच निरुक्तज्ञानेच्छाप्रभृतिष्वपि तदभाववत्तानिश्चयादिनि.
ष्ठप्रतिबंधकतासमशीलमेव प्रतिबंधकत्वमनुभूयते मणिमंत्रादिन्यायेन
प्रतिबंधकत्वं नानुभूयतएवेत्युच्यते तदा आत्मगुणत्वासमानाधिकरण
प्रतिबंधकत्वमेव मणिमंत्रादिन्यायेन प्रतिबंधकत्वं वाच्यम् । नच
कामिन्यादिजन्यसुखसर्पादिजन्यदुःखशत्रुद्वेषाभिमतकार्यविषयकप्रयत्ना
दिषु ज्ञानांतरप्रतिबंधकत्वेनानुभूतेषु तत्प्रतिबंधकत्वासमन्वयप्रसङ्ग.
इति वाच्यम् । ज्ञानत्वेच्छात्वासमानाधिकरणप्रतिबंधत्वस्यैव निरु.
क्तप्रतिबंधकतारूपत्वात् । तथाच निरुक्तसुखादिषु सुवर्णादिनि
ष्ठोष्णस्पर्शभास्वररूपोपलब्धिप्रतिबंधकेषु पार्थिवरूपस्पर्शादिष्वपि नि.
रुक्तप्रतिबंधकत्वस्य नक्षतिरिति, यदि ज्ञानेच्छयोरिव आत्मविशेष.

गुणेषु सुखदुःखादिष्वपि सजातीयप्रतिबंधकत्वस्यैवानुभवतः तदात्मविशेषगुणत्वासमानाधिकरणप्रतिबंधकत्वमेव मणिमंत्रादिन्यायेन प्रतिबन्धकत्वं वाच्यम। तथाच मणिमन्त्रादिषु निरुक्तपार्थिवरूपस्पर्शादिषु दूरस्थत्वबाधिर्यमूकत्वादिषुच तत्तत्प्रतिबंधकेषु निरुक्तप्रतिबन्धकत्वमक्षतमिति नकापि अनुपपत्तिः ॥

पक्षतावच्छेदकावच्छेदेन साध्यानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका। नतु सामानाधिकरण्येन साध्यसिद्धिरपि, सामानाधिकरण्येन सिद्धिसत्वेप्यवच्छेदकावच्छेदेन साध्यसंशयजननद्वारा अवच्छेदकावच्छेदेन साध्यानुमितिजननात। पक्षतावच्छेदकसामानाधिकरण्येनानुमितिंप्रति पक्षतावच्छेदकावच्छेदेन पक्षतावच्छेदकसामानाधिकरण्येनच साध्यसिद्धिः प्रतिबन्धिका। पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकव्यापकविधेयप्रतियोगिकत्वं साध्यतावच्छेदकसम्बन्धांशे विशेषणतया भासते। तथाच पर्वतो वह्निमानित्यवच्छेदकावच्छेदेनानुमितिः पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्न वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनी भवति, निरुक्तसंबन्धविषयिणी केवलसंयोगसम्बन्धविच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनी अनुमितिः पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितिः इति सामानाधिकरण्येनानुमितेरवच्छेदकावच्छेदेनानुमितेश्च भेदो ज्ञेयः। अवच्छेदकावच्छेदेन तद्वत्ताबुद्धिंप्रति अवच्छेदकावच्छेदेन सामानाधिकरण्येनच बाधनिश्चयः प्रतिबन्धकः, सामानाधिकरण्येन तद्वत्ताबुद्धिंप्रति अवच्छेदकावच्छेदेनैव बाधनिश्चयः प्रतिबन्धकः, नतु सामानाधिकरण्येन बाधनिश्चयः प्रतिबन्धकः, एकत्र बाधनिश्चये सत्यपि अन्यत्र तद्बुध्युदयात् ॥

—•विषयताविचारः•—

विषयता त्रिविधा, विशेष्यता प्रकारता संसर्गताचेति। प्रकारतैव विशेषणतेत्युच्यते। यथा संयोगसम्बन्धेन घटवद्भूतलमित्यत्र भूतले विशेष्यता घटे प्रकारता संयोगसम्बन्धे संसर्गताच वर्तते, एवमेव सविषयकपदार्थपञ्चकेऽपि विषयतात्रयं प्राह्यम्। सैव विशेष्यता प्रकारताच अनुमितिनिरूपिताचेद्विशेष्यता उद्देश्यतेति प्रकारता विधेयतेतिच व्यवह्रियते। यथा पर्वतो वह्निमानित्यनुमितौ पर्वतनिष्ठाविशेष्यता उद्देश्यतेति वह्निनिष्ठा प्रकारता विधेयतेतिच व्यवह्रियते। निर्विकल्पकज्ञानेतु विशेष्यता प्रकारता संसर्गता रूपविषयतात्रयं नास्ति, किन्तु घटइति सविकल्पकादव्यवहितपूर्वं जायमाने घटविषयकनिर्विकल्पकप्रत्यक्षे विषयीभूतेषु घटघटत्वतत्समवायेषु तुरीयविषयताख्या एकैव विषयता त्रिष्वपि प्रत्येकं सम्भवति। अन्याः कृतिनिरूपिताश्च विषयताः उद्देश्यता विधेयता उपादानत्वाख्यास्तिस्रो वर्तन्ते यथा जलानयनाय कपालाभ्यां घटमहं कुर्यामित्यत्र जलानयने उद्देश्यत्वाख्या कापालयोरुपादानत्वाख्या घटे विधेयत्वाख्याच विषयता वर्तते, अनया रीत्या सर्वाअपि कृतिनिरूपितविषयताः ज्ञेयाः। घटं न जानामीत्यत्र द्वितीयार्थीभूतविषयत्वस्य ज्ञाधात्वर्थीभूतज्ञाने समन्वयः ज्ञानस्य नञर्थीभूताभावेच अन्वयः, तस्यच आख्यातार्थीभूताश्रयत्वेन्वयः, तथाच घटविषयकज्ञानाश्रयत्वाभाववानहमिति बोधोङ्गीक्रियते नैयायिकैः। नञसमभिव्याहृतज्ञाधातोर्भावरूपाज्ञानार्थकत्वमङ्गीकृत्य घटविषयकज्ञानवानहमिति बोधोङ्गीक्रियते वेदान्तिभिः॥

इदमत्रावधेयं, समानाधिकरणयोरेकज्ञानीययोः विशेष्यताप्रकारतयोः समनैयत्यादभेदइति केचन वदन्ति। तादृशयोः विशेष्यताप्रकारतयोः समनैयत्यादवच्छेद्यावच्छेदकभावइत्यपरे वदन्ति। यथा

आद्यमते घटवद्भूतलमिति ज्ञाने घटो भूतलांशे विशेषणं घटत्वां-शे विशेष्यश्च भवति, अत्र घटनिष्ठायाः भूतलनिष्ठविशेष्यतानिरूपितप्रकारतायाः घटत्वनिष्ठप्रकारतानिरूपिताविशेष्यतायाश्च अभेदस्याङ्गीकृतत्वेन घटत्वनिष्ठप्रकारतानिरूपिता या घटनिष्ठा प्रकारता तन्निरूपिता या भूतलनिष्ठा विशेष्यता इति तच्छालिबोधो भवतीत्यङ्गीक्रियते । द्वितीयमते घटवद्भूतलमित्यत्र घटत्वनिष्ठ-प्रकारतानिरूपिता या घटनिष्ठा विशेष्यता तदवच्छिन्ना या घट-निष्ठा प्रकारता तन्निरूपिता या भूतलनिष्ठा विशेष्यताइति तच्छालिबोधोऽङ्गीक्रियते । आद्यमते तादृशविशेष्यताप्रकारतयोरभेदाङ्गी-कारेपि तयोः प्रकारतारूपैव, नविशेष्यतारूपता, नातस्तन्म-ते घटत्वनिष्ठप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता तन्निरू-पिता या भूतलनिष्ठा विशेष्यताइति तच्छालिबोधस्य सम्भवः ॥

—•क्रमेण प्रत्यक्षादिप्रमाणचतुष्टयनिरूपणे सङ्गतिनिरूपणम •—

यन्निरूपणानन्तरं यन्निरूप्यते तत्तन्निरूपितसङ्गतिमदितिन्यायेन सङ्गतिमन्तराऽनन्तरोक्तिनिरूपणमसङ्गतम् । अतस्सङ्गतिज्ञानाय सा निरूपणीया, सङ्गतित्वञ्च अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धत्वं, अत्रायं क्रमः, प्रथमंनिरूप्यनिष्ठस्य निरूपितसम्बन्धस्य ज्ञानं, तदन्वेकसम्बन्धिनो निरूपित-स्य ज्ञानं, तदन्वेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति नियमेन अपरसम्बन्धिनो निरूपणीयस्य स्मृतिः, तदनु सङ्गतिमतोऽपरसम्ब-न्धिनो जिज्ञासा, तदन्वनन्तराभिधानम , तथाच अनुमानस्य व्याप्त्यनुभवप्रयोज्यतया तस्यच प्रत्यक्षप्रमाणाधीनतया प्रत्यक्षानुमानयो रुपजीव्योपजीवकत्वयोर्वर्तमानतया तादृशोपजीव्योपजीवकत्व-सङ्गतौ लक्षणसमन्वयः प्रदर्श्यते, अनन्तराभिधानंनाम अनन्तरो-क्तस्यानुमानस्य निरूपणं तत्प्रयोजकीभूता या जिज्ञासा प्रत्यक्षप्र

माणनिरूपणानन्तरं अनुमानप्रमाणनिरूपणं भूयादिति जिज्ञासा, तादृशजिज्ञासाजनकं यत्स्मरणं अनुमानस्मरणं, तत्प्रयोजको निरू. प्यनिष्ठो यस्सम्बन्धः उपजीव्योपजीवकत्वरूपस्सम्बन्धः, तत्सम्ब. न्धत्वमुपजीव्योपजीवकभावरूपसङ्गतौ वर्तत इति समन्वयः ॥

"स प्रसङ्ग उपोद्घातः हेतुतावसरस्तथा, निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते,, इत्यनेन सङ्गतिष्षड्विधेति ज्ञायते तत्र स्मृ. तस्योपेक्षानर्हत्वं प्रसङ्गः, स्मृतिप्रयोजकत्वञ्च सारूप्यवैरूप्यादिस्वज्ञा. नजनकज्ञानविषयत्वं उपोद्घातः, उपजीव्योपजीवकभावो हेतुता उ पजीवयतीत्युपजीव्यं, प्रयोजकमित्यर्थः, उपजीवतीत्युपजीवकं, प्रयो ज्यमित्यर्थः, प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्युत्तरकालिकावश्यवक्त. व्यत्वं अवसरः, स्वकारणजन्यत्वं निर्वाहकैक्यं एतत्फलयास्सङ्ग. तिरिति बोध्यं, स्वकार्यजनकत्वं कार्यैक्यं, एतत्कारणयोस्सङ्गतिरि. ति बोध्यं, अन्यास्सङ्गतयः फलकारणयोरुभयोरपि स्थलभेदेन सम्भ वंतीति बोध्यं, बहुप्रमाणमूलतया बहुवादिसम्मततयाच प्रत्यक्षप्रमा णस्य प्रथमतो निरूपणम् । प्रत्यक्षप्रमाणस्येन्द्रियरूपतया अनु. मानस्यच व्याप्तिज्ञानरूपत्वेन इन्द्रियायत्ततया प्रत्यक्षानन्तरमनुमान. निरूपणे उपजीव्योपजीवकभावस्सङ्गतिरिति बोध्यम् । अनुमान. निरूपणानन्तरं उपमाननिरूपणेऽवसरसङ्गतिर्बोध्या । फलभूतायाः गवयो गवयपदवाच्यइत्याकारकोपमितेः शक्यात्मकवृत्तिज्ञानरूपतया तादृशवृत्तिज्ञानस्य शाब्दबोधप्रयोजकतया उपमितिशाब्दबोधयोः फ लयोरेव उपजीव्योपजीवकभावसङ्गतिर्बोध्या ॥

—शाब्दबोधविचारः—

शाब्दबोधो द्विविधः खण्डशाब्दबोधः अखण्डशाब्दबोधश्चे. ति, आद्यः घटमानयेत्यत्र घटपदस्य घटोऽर्थः द्वितीयायाः कर्मत्वम र्थः आङ्पूर्वकनयतेरानयनं आख्यातस्य कृतिश्चार्थः । एवंरूपः ख

ण्डशाब्दबोध', द्वितीयः घटकर्मकानयनानुकूलकृतिमांश्चैत्र इत्याकारकः आद्यस्य शाब्दबोधत्वव्यवहारो गौणः, किन्तु शाब्दबोधार्थत्वेन वृत्तिज्ञानस्यैव खण्डबोधत्वव्यवहारः, सच खण्डबोधोऽन्तेवासिनां शाब्दबुद्धिसौकर्याय भवति, गौणत्वञ्च शक्तिज्ञानजन्योपस्थितिप्रयोज्यशाब्दबोधीयविषयत्वाभाववत्त्वम् ।

न्यायमते प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधोऽङ्गीक्रियते । यथा घटमानयेत्यत्र घटकर्मकानयनानुकूलकृतिमान् चैत्र इति ॥

वैयाकरणमते भावप्रधानमाख्यातमिति नियमेन भावार्थमुख्यविशेष्यकबोधोऽङ्गीक्रियते, भावोनाम धात्वर्थः प्रधानं विशेष्यं, यथा तत्रैव चैत्रकर्तृकं घटकर्मकमानयनमिति ॥

मीमांसकमतेचाख्यातार्थमुख्यविशेष्यकबोधोऽङ्गीक्रियते, यथा तत्रैव घटकर्मकानयनानुकूला चैत्रसमवेता कृतिरिति ॥

परोक्षमनाहार्यमसन्दिग्धमिति न्यायेन शाब्दबोधस्य परोक्षतया आहार्यज्ञानभिन्नस्संशयभिन्नश्च भवति ॥

पुनरपि शाब्दबोधोऽपि द्विविधः, लौकिको वैदिकश्चेति, आप्तवाक्यजन्यबोधो लौकिकः, श्रुतिस्मृत्यादिजन्यबोधो वैदिकः ॥

शक्तिज्ञानजन्यशाब्दबोधसामग्री प्रदर्श्यते, प्रथमं पदज्ञानं, तदनु शक्तिज्ञानं, द्वाभ्यामुपस्थितिः, तदनु शाब्दबोधः, यथा घटमानयेत्यत्र प्रथमं घटपदज्ञानं, तदन्वंपदज्ञानं, तदन्वाङ्पूर्वकनीधातुज्ञानं, तदन्वाख्यातज्ञानं । इदं पदज्ञानमुच्यते । तदनु घटपदस्य घटे शक्तिः अम्पदस्य कर्मत्वे शक्तिः, आङ्पूर्वकनयतेरानयने शक्तिः, आख्यातस्य कृतौ शक्तिः, इतिज्ञानं शक्तिज्ञानं ।

तदनु घटपदात् घटइत्युपस्थितिः अम्पदात्कर्मत्वमित्युपस्थितिः, आङ्पूर्वकनीधातोः आनयनमित्युपस्थितिः, आख्यातात्कृतिरित्युपस्थितिश्च भवति । तदन्वाकांक्षायोग्यतासन्निधितात्पर्यज्ञानादिसामग्रीबलाद्घटकर्मकानयनानुकूलकृतिमांश्चैत्र इत्याकारकः घटकर्मकानयनानुकूलकृतिप्रकारकः चैत्रविशेष्यकश्च बोधो भवति ॥

लक्ष्यार्थविषयकशाब्दबोधसामग्री प्रदर्श्यते, प्रथमं पदज्ञानं, तदनु शक्तिज्ञानं, द्वाभ्यां शक्यार्थोपस्थितिः, तदन्वन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा ज्ञानं, तदनु लक्ष्यपदार्थे तात्पर्यज्ञानं, तदनु लक्ष्यपदार्थोपस्थितिः तदनु लक्ष्यपदार्थविषयकशाब्दबोध इत्येवं क्रमः । उदाहरणे गङ्गायां घोषइत्यत्र प्रथमं गङ्गापदज्ञानं तदनु सप्तमीविभक्तिज्ञानं, तदनु घोषपदज्ञानं, तदनु गङ्गादिपदानां शक्तिज्ञानानि, तदनु प्रवाहाद्युपस्थितयः तदनु प्रवाहवृत्तित्वं घोषेऽनुपपन्नमित्यन्वयानुपपत्तिज्ञानं, तदनु गङ्गापदस्य प्रवाहवाचकत्वे स्वीकार्ये तीरे वक्तृतात्पर्यमनुपपन्नमिति तात्पर्यानुपपत्तिज्ञानं तदनु गङ्गापदं तीरे लाक्षणिकमिति लाक्षणिकत्वज्ञानं तदनु गङ्गापदात्तीरमित्युपमितिः तदन्वाकांक्षादिसामग्रीबला तीरवृत्तिर्घोष इति शाब्दबोधः ॥

लक्षणास्थले कुत्रचिदन्वयानुपपत्तिः लक्षणाबीजं, यथा गङ्गायां घोषः मञ्चाः क्रोशन्तीत्यादौ । कुत्रचित्तात्पर्यानुपपत्तिर्लक्षणाबीजं, यथा यष्टीः प्रवेशय छत्रिणो यांतीत्यादौ इति केचन वदन्ति । तात्पर्यानुपपत्तेस्सर्वत्रापि सम्भवेन सर्वत्रापि तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति सिद्धान्तः । प्रकरणादिकं तात्पर्यग्राहकं तच्च प्रकरणं सन्दर्भभेदेन देशकालाद्यन्यतमरूपतां भजते ॥

नानार्थकस्थले सैंधवमानयेत्यादावेव तात्पर्यज्ञानस्यावश्यकता, नसर्वत्र शाब्दबोधे तस्यावश्यकतेति केषांचिदाशयः । शाब्दबोध-

मात्रंप्रति तात्पर्यज्ञानं कारणमिति अन्येषा माशयः ॥

एतन्मते शक्तिर्लक्षणाचेति वृत्तिर्द्विविधैव, न व्यंजनावृत्तिर. पि तृतीया अभ्युपेयते, यतः शब्दशक्तिमूलव्यंजनावृत्तिश्शक्त्या, अ. र्थशक्तिमूलव्यंजनावृत्तिरनुमानेनच चरितार्था भवति यथा 'दूरस्था भूधरा रम्या, इत्यत्र भूधरपदस्य पर्वतनृपयोस्समाना शक्तिरेवाङ्गी क्रियते । 'गच्छगच्छसिचेत्कान्ततत्रैव स्याज्जनिममे, त्यादौ इयं का. न्ता भर्तृगमनोत्तरकालकमरणव्यापारवतीएतादृशविलक्षणशब्दप्रयोग कर्तृत्वात इत्यनुमानेनेवार्थशक्तिमूल व्यंजनया बोध्यस्य मरणरूपार्थस्य बोधनात् वृत्तिर्द्विविधैवेति सिद्ध ॥

— अवच्छिन्नानिरवच्छिन्नाविषयताविचारः —

अनुल्लिख्यमानजात्यखंडोपाध्यतिरिक्तधर्माणां स्वरूपतोभाने प्रमाणाभाव इति नियमानुरोधेन उल्लिख्यमानजात्यखण्डोपाधीनां तद. तिरिक्तघटपटादिधर्माणां च स्वरूपतः 'किंचिद्रूपमपुरस्कृत्य, भानं नास्तीति सिद्धं, तथा च पर्वतो वह्निमानित्यत्र जातेरनुल्लेखाद्वह्नित्वस्य स्वरूपत एव भानं न तु वह्नित्वत्वरूपेण भानं, यत्र वह्नित्वविशिष्टवानि ति साध्यते तत्र वह्नित्वस्योल्लिख्यमानतया वह्नित्वत्वेन वह्नित्वस्य भा. नं, वह्नित्वनिष्ठा साध्यतावच्छेदकता वह्नित्वत्वावच्छिन्ना भातीत्यर्थः, तथाच यत्र जातेरखण्डोपाधेर्वोल्लेखः तत्र जात्यखण्डोपाधिवृत्तिध. र्मपुरस्कारेण भानं, यत्र चोल्लेखो नास्ति तत्र स्वरूपत एव भानं, जात्यखण्डोपाध्यतिरिक्तधर्माणांतु सर्वदापि किञ्चिद्रूपेणैव भान नतु स्वरूपत इत्यवधेयम् ॥

—विभक्त्यर्थविचार.—

अस्मिन् शास्त्रे प्रायशः स्थलविशेषेषु गुरुभिरुपदिष्टानेव शा. ब्दबोधप्रकारान् अन्तेवासिनो अनधीतसम्पूर्णशास्त्रा विज्ञातु वक्तुं वा प्रभवन्ति, नपुनस्स्वातन्त्र्येण निरूपयितुं प्रभवन्ति, अतस्सर्वे

पि प्रतिवाक्यमनायासेन यथावा शाब्दबोधप्रकारं निर्णेतुं प्रभवेयुः तथा तदानुरूप्येण सुप्तिङविभक्त्यर्थान् अव्ययार्थान् अर्थनिर्णायकानि मूलसूत्राणि दुरवगाहताभिया परिहाय सुलभया शैल्या यथामति निरूपयितुं प्रयते ॥

—॰द्वितीयविभक्त्यर्थविचारः॰—

द्वितीयविभक्तेः आधेयत्वं, विषयत्वं; विशेष्यत्वं; प्रकारत्वं' प्रतियोगित्वं, निरूपितत्वं; व्यापकत्वंचार्थः ॥

आधेयत्वं, चैत्रो ग्रामं गच्छतीत्यत्र ग्रामनिष्ठोत्तरसंयोगावच्छिन्नक्रियावान् चैत्रइति बोधः ॥

विषयत्वं, घटं जानातीत्यत्र घटविषयकज्ञानाश्रयश्चैत्रइतिबोधः॥

विशेष्यत्वं पृथिवीं लक्षयतीत्यत्र पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलकृतिमान् चैत्रइति बोधः, एवमेव पृथिवीं विभजते पृथिवीं निरूपयतीत्यादावपि बोधः; लक्षधातोः लक्षणप्रकारकज्ञानानुकूलव्यापारोऽर्थः । विपूर्वकभजधातोः परस्परविरुद्धसामान्यधर्मव्याप्यविशेषधर्मप्रकारकज्ञानानुकूलव्यापारोर्थः, निपूर्वकरूपधातोः लक्षणस्वरूपविभागप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारोर्थः ॥

प्रकारत्वं, पृथिव्या लक्षणमाहेत्यत्र, पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् चैत्रइति बोधः ॥

प्रतियोगित्वं, घटं नाशयतीत्यत्र घटप्रतियोगिकनाशानुकूलव्यापारकर्ता चैत्र इतिबोधः ॥

निरूपितत्वं, घटंप्रति कारणं दण्डइत्यादौ घटनिरूपितकारणतावान् दण्ड इति बोधः ॥

व्यापकत्वं, मासमधीते चैत्रइत्यत्र मासत्वव्यापकाध्ययनकर्ता चैत्र इतिबोधः, क्रोशं कुटिलानदीत्यत्र क्रोशत्वव्यापककौटिल्यवती नदीति बोधः, कालाध्वनोरत्यन्तसंयोगे द्वितीयेति सूत्रेण कालाध्ववाचकपदोत्तरवर्तिद्वितीयाया अत्यन्तसंयोगरूपार्थे (व्यापकत्वरूपार्थे) विधानात् ॥

एवमेव द्वितीयाविभक्तिस्थलेऽन्यत्रापि सन्दर्भभेदेनार्थो ज्ञेयः ॥

—तृतीयाविभक्त्यर्थविचारः—

तृतीयाविभक्तेः कर्तृत्वं, करणत्वं, ज्ञानज्ञाप्यत्वं, अभेदः,साहित्यं, प्रतियोगित्वं, निरूपितत्वं, आधेयत्वं, समवेतत्वं, समानकालिकत्वं, अवच्छिन्नत्वंचार्थः ॥

कर्तृत्वं, चैत्रेण पच्यते तण्डुलइत्यत्र, चैत्रकर्तृकपचनकर्मीभूतस्तण्डुल इति बोधः ॥

करणत्वं, परशुना छिनत्तीत्यत्र, परशुकरणकच्छेदनकर्ता चैत्र इति बोधः ॥

ज्ञानज्ञाप्यत्वं धूमेन वह्निमनुमिनोतीत्यत्र, धूमज्ञानज्ञाप्यवह्निविधेयकानुमितिमान् चैत्र इत्याकारको बोधः ॥

अभेदः, धान्येन धनवानित्यत्र, धान्याभिन्नधनवानयामिति बोधः ॥

साहित्यं, पुत्रेणागतः पितेत्यत्र, पुत्रागमनसहितागमनकर्ता पितेति बोधः ॥

प्रतियोगित्वं; रूपेण रहितइत्यत्र, रूपप्रतियोगिकाभाववान् वायुरिति बोधः ॥

निरूपितत्वं, पुत्रेण सहितइत्यत्र, पुत्रानिरूपितसाहित्यवानयमिति बोधः ॥

आधेयत्वं, व्याप्त्या विशिष्टमित्यत्र, व्याप्तिनिष्ठप्रकारतानिरू-

पकाभिन्नमिति बोधः ॥

समवेतत्वं, मया क्रियत इत्यत्र, मत्समवेतकृतिविषयोयमिति बोधः एवमेव मया ज्ञायतइत्यादावपि ॥

समानकालिकत्वं, धावता पुरुषेण पीतमित्यत्र, धावनसमानकालिकं पुरुषकर्तृकं पानमिति बोधः ॥

अवच्छिन्नत्वं, यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वमित्यत्र, यद्विषयकत्वावच्छिन्ना अनुमितिप्रतिबन्धकतेति बोधः ॥

एवमेवान्यत्रापि तृतीयाविभक्तिस्थलेऽर्थो ज्ञेय. ॥

## —•चतुर्थीविभक्त्यर्थविचारः•—

उद्देश्यत्व, तृप्तिप्रयोजकत्व, समवेतत्व, निष्पत्तिप्रयोजकत्व, विकारित्वं, वृद्धिप्रयोजकत्वं, आश्रितत्वं, विषयत्वं, स्वापहरणेच्छा प्रयोज्येच्छाविषयत्वं, प्रयोजकत्वं, इच्छाधीनेच्छाविषयत्वञ्च चतुर्थ्यर्थाः ॥ इमे ईषद्भेदमाश्रित्य बालबोधाय निरूपिताः ॥

उद्देश्यत्व, ब्राह्मणाय गां ददातीत्यत्र, ब्राह्मणोद्देश्यकगोकर्मकदानवानयमिति बोधः ॥

तृप्तिप्रयोजकत्वं, भूतेभ्यो बलिरित्यत्र, भूततृप्तिप्रयोजकीभूता बलिरिति बोधः ।

समवेतत्वं, गवे सुखमित्यत्र, गोसमवेतं सुखमिति बोधः ।

निष्पत्तिप्रयोजकत्वं यूपाय दार्वित्यत्र, यूपनिष्पत्तिप्रयोजकीभूतं दार्विति बोधः ।

विकारित्वं, कुंडलायाष्टापदमित्यत्र कुण्डलविकार्यष्टापदमिति बोधः ।

वृद्धिप्रयोजकत्वं वृक्षायोदकं सिञ्चतीत्यत्र वृक्षवृद्धिप्रयोजकीभूतसेचनकर्तायमिति बोधः ॥

आश्रितत्वं, नारदाय रोचते कलह इत्यत्र नारदाश्रितप्रीतिविषयीभूतः कलह इति बोधः ।

विषयत्वं, पुष्पेभ्यः स्पृहयतीत्यत्र, पुष्पविषयकेच्छावानयमिति बोधः ॥

स्वाहरणेच्छाप्रयोज्येच्छाविषयत्वं, एधेभ्यो व्रजतीत्यत्र, इन्धनाहरणेच्छाप्रयोज्येच्छाविषयगमनकर्तायमिति बोधः ॥

प्रयोजकत्वं, अन्नाय यतत इत्यत्र, अन्नसम्पादनप्रयोजकीभूतयत्नवानयमिति बोधः ॥

इच्छाधीनेच्छाविषयत्वं, यागाय यातीत्यत्र, यागदर्शनेच्छाधीनेच्छाविषयगमनकर्तायमिति बोधः ॥

एवमन्यत्रापि चतुर्थ्यर्थो ज्ञेयः ॥

—•पञ्चमीविभक्त्यर्थविचारः•—

अवधिमत्वं, प्रतियोगित्वं, जन्यत्वं, स्वकर्तृकोच्चारणाधीनत्वं, निरूपितत्वं, ज्ञानज्ञाप्यत्वं, (आरम्भः, पर्यन्तः) तदपेक्षत्वं, इमे पञ्चम्यर्थाः ॥

अवधिमत्वं, वृक्षात्पर्णं पततीत्यत्र, वृक्षावधिकपतनाश्रयं पर्णमिति बोधः ॥

प्रतियोगित्वं, घटः पटाद्भिन्न इत्यत्र पटप्रातियोगिकभेदाश्रयो घटइति बोधः ॥

जन्यत्वं; दण्डाद्घटइत्यत्र, दण्डजन्योघट इति बोधः ॥

निरूपितत्वं; साध्याभाववतोऽवृत्तिरित्यत्र, साध्याभाववन्निरूपितवृत्तित्वाभाववानिति बोधः ॥

ज्ञानज्ञाप्यत्वं, पर्वतो वह्निमान्धूमादित्यत्र, धूमज्ञानज्ञाप्यवह्निमान्पर्वत इति बोधः ॥

आरम्भः आजननादभ्यस्यतीत्यत्र, जननारम्भकाभ्यासकर्तायमितिबोधः आद्यशरीरप्राणसंयोगो जननम् ।

पर्यन्तः, आमरणात् ध्यायतीत्यत्र, मरणपर्यन्तध्यानवानय मिति बोधः, चरमशरीरप्राणसंयोगध्वंसो मरणम् ॥

तत्कर्तृकोच्चारणाधीनत्वं, पण्डितात्पुराणं शृणोतीत्यत्र पण्डितकर्तृकोच्चारणाधीनश्रवणकर्ता अयमिति बोधः ॥

तदपेक्षत्वं, अयमस्माद्दीर्घइत्यत्र; एतदपेक्षदीर्घत्ववानयमिति बोधः ॥

एवमन्यत्रापि पञ्चम्यर्था विज्ञेयाः ॥

— षष्ठीविभक्त्यर्थविचारः —

विषयत्वं, विशेष्यत्वं, प्रकारत्वं, प्रतियोगित्वं, निरूपितत्वं, वृत्तिः, स्वामितानिरूपितस्वत्वं, प्रतिपादकत्वं, उच्चरितत्वं, प्रतियोगित्वानुयोगित्वे, अभेदः; कर्तृत्वं, कर्मत्वं, अवयवत्वं, करणत्वं, समवेतत्वं, स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्वञ्च षष्ठ्यर्थाः ॥

विषयत्वं, घटस्य ज्ञानमित्यत्र, घटविषयकं ज्ञानमिति बोधः ॥

विशेष्यत्वं, घटस्य लक्षणमाहेत्यत्र, घटविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानयमिति बोधः ॥

प्रकारत्वं, पृथिव्या लक्षणस्य ज्ञानं जनयतीत्यत्र, पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारकर्तायमिति बोधः ॥

प्रतियोगित्वं, घटस्य नाशइत्यत्र, घटप्रतियोगिको नाश इति बोधः ॥

निरूपितत्वं, घटस्य कारणमित्यत्र, घटनिरूपितकारणतावानयमिति बोधः ॥

वृत्तिः, घटस्य रूपमित्यत्र घटवृत्तिरूपमिति बोधः ॥

स्वामितानिरूपितस्वत्वं, राज्ञः पुरुषइत्यत्र, राजनिष्ठस्वामिता निरूपितस्वत्ववानयंपुरुषइति बोधः ॥

प्रतिपादकत्वं, रामस्य नममाहिमेत्यत्र, रामप्रतिपादकनामधेयमाहिमेति बोधः ॥

उच्चारितत्वं, आप्तस्य वाक्यमित्यत्र, आप्तोच्चारितं वाक्यमिति बोधः ॥

प्रतियोगित्वानुयोगित्वे, भूतलस्य घटस्यच संयोगस्सम्बन्ध इत्यत्र, भूतलानुयोगिको घटप्रतियोगिकस्संयोगइति बोधः ॥

अभेदः राहोश्शिरः, नाम्नोर्द्वयमित्यादौ क्रमेण राह्वभिन्नंशिरः नामाभिन्नं द्वयमिति बोधः ॥

कर्तृत्वं, चैत्रस्य भोजनमित्यत्र, चैत्रकर्तृकं भोजनमितिबोधः॥

कर्मत्वं, विश्वस्य रक्षितेत्यत्र, विश्वकर्मकरक्षणकर्तेति बोधः॥

अवयवत्वं, चैत्रस्य हस्तइत्यत्र, चैत्रावयवो हस्तइति बोधः॥

करणत्वं, 'नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचने,त्यादौ काष्ठकरणकतृप्त्यभाववानग्निः, पुरुषकरणकतृप्त्यभाववती वामलोचनेति बोधौ क्रमेण ज्ञेयौ ॥

समवेतत्वं घटस्य रूपमित्यत्र, घटसमवेतं रूपमिति बोधः ॥

स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्वं, नराणां क्षत्रियश्शूर इत्यत्र क्षत्रियत्वशून्यनरव्यावृत्तशूरत्ववान् क्षत्रियइति बोधः ॥

शेषे षष्ठीति सूत्रेणेतरविभक्तिभिरानिर्दिष्टेष्वर्थेषु षष्ठीविधानात् शतं षष्ठ्यर्था इति प्राचीनवचनाच्च षष्ठीविभक्त्यर्थानामनन्तत्वं, एवमन्यत्रापि सन्दर्भभेदेन षष्ठ्यर्था विज्ञेयाः ॥

## —*सप्तमविभक्त्यर्थविचारः*—

आधेयत्वं, विषयत्वं, विशेष्यत्वं, निरूपितत्वं, व्यापकत्वं, अभेदः, अवच्छेद्यत्वं, घटकत्वं, प्रतिपाद्यत्वं, प्रकारत्वं, सामानाधिकरण्यरूपवैशिष्ट्यं, समानकालिकत्वं, पूर्वकालिकत्वं, उत्तरकालिकत्वं अनुयोगित्वं, प्रतियोगित्वं, स्वविषयकेच्छाधीनत्वं, स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यसप्तम्यन्तपदार्थव्यावृत्तत्वं, कार्यकारणभावः एते सप्तम्यर्थाः भवन्ति ॥

आधेयत्वं, भूतले घटइत्यत्र, भूतवृत्तिर्घटइति बोधः ॥

विषयत्वं, कान्तायां रतिः, सर्पे द्वेषइत्यादौ कान्ताविषयिणी रतिः, सर्पविषयको द्वेषइति बोधौ भवतः ॥

विशेष्यत्वं पर्वते वह्निमनुमिनोमीत्यत्र, पर्वतविशेष्यकवह्निविधेयकानुमितिमानहमिति बोधः ॥

निरूपितत्वं, भूतले घटइत्यत्र, भूतलनिरूपितवृत्तितावान्घट इति बोधः ॥

व्यापकत्वं, दिनेदिने पठतीत्यत्र, दिनत्वव्यापकपटनानुकूलकृतियानयमिति बोधः ॥

अभेदः, शिवे भागवतइत्यत्र, शिवाभिन्नभगवद्विषयकभक्तिमानयमिति बोधः ॥

अवच्छेद्यत्वं, अग्रेवृक्षःकपिसंयोगीत्यत्र, अग्रावच्छिन्नकपिसंयोगवान्वृक्षइति बोधः ॥

घटकत्वं, वने वृक्षः, सूत्रे पदमित्यादौ, वनघटकीभूतो वृक्षः सूत्रघटकं पदमिति बोधौ भवतः ॥

प्रतिपाद्यत्वं, शास्त्रे विषयइत्यत्र, शास्त्रप्रतिपाद्यो विषय इति बोधः ॥

प्रकारत्वं, पर्वते वह्नौ सन्दिहान इत्यत्र, पर्वतविशेष्यकव. ह्निप्रकारकसन्देहवानयमिति बोधः ॥

सामानाधिकरण्यरूपवैशिष्ट्यं, द्रव्यकर्मभिन्नत्वेसति सामा. न्यवान् गुण इत्यत्र, द्रव्यकर्मभिन्नत्वविशिष्टसामान्यवान् गुण इति बोधः ॥

समानकालिकत्वं, "वित्ते नष्टे वितरणमहो कर्तुमिच्छन्ति मू. ढा,इत्यत्र वित्तनाशकालिकवितरणचिकीर्षवन्तो मूढा इति बोध , पि. तरि समायाते पुत्रः पाठशालां गत इत्यत्राप्येवमेव ॥

पूर्वकालिकत्वं, पितरि गमिष्यति गतइत्यत्र, पितृगमनपूर्वका लिकगमनकर्तायमिति बोधः ॥

उत्तरकालिकत्वं, पितरि गते गत इत्यत्र पितृगमनोत्तरकालि कगमनकर्ता पुत्रइति बोधः ॥

अनुयोगित्वं, भूतले घटसंयोगइत्यत्र, भूतलानुयोगिको घट- संयोग इति बोधः ॥

प्रतियोगित्वं, भूतलसंयोगो घट इत्यत्र, भूतलानुयोगिकः घट. प्रतियोगिकः संयोग इति बोधः ॥

स्वविषयकेच्छाधीनत्वं, चर्मणि द्वीपिनं हन्तीत्यत्र चर्मविषय केच्छाधीनद्वीपिहननकर्तायमिति बोधः ॥

स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यसप्तम्यन्तपदार्थव्या. वृत्तत्वं, नरेषु क्षत्रियश्शूर इत्यादौ क्षत्रियत्वशून्यनरव्यावृत्तशूरत्व. वान् क्षत्रिय इति बोधः ॥

कार्यकारणभावः, पयःपाने तृषा शाम्यतीत्यत्र, पयःपानज न्यतृषाशान्तिमानयमिति बोधः ॥

एवमेवान्यत्रापि सन्दर्भभेदेन सप्तम्यर्था निर्णेयाः ॥

—अव्ययार्थविचारः—

इववद्वायथादिपदानां सादृश्यमर्थः, चन्द्रइवाह्लादकं मुखमित्यत्र सादृश्यस्य साधारणधर्मतोऽतिरिक्ततावादिमते चन्द्रस्यवशब्दार्थीभूतसादृश्ये निरूपितत्वसम्बन्धेन सादृश्यस्यचाह्लादकमित्यत्राह्लादकपदार्थैकदेशीभूताह्लादकत्वे प्रयोजकत्वसम्बन्धेनान्वये चन्द्रनिरूपितसादृश्यप्रयोजकाह्लादकत्ववन्मुखमिति बोधः ॥

आह्लादकपदाभावे चन्द्रवन्मुखमित्यादौ चन्द्रनिरूपितसादृश्यवन्मुखमिति बोधः ॥ आह्लादकत्वेन चन्द्रवन्मुखमित्यादावाह्लादकत्वप्रयोज्यचन्द्रनिरूपितसादृश्यवन्मुखमिति बोधः। चन्द्रमुखी बालेत्यादौ चन्द्रपदस्य चन्द्रसादृश्यविशिष्टार्थकत्वे चन्द्रनिरूपितसादृश्यविशिष्टाभिन्नमुखविशिष्टा बालेति बोधः। चन्द्राह्लादकं मुखमित्यादौ चन्द्रपदस्य चन्द्रनिरूपितसादृश्यप्रयोजकार्थकत्वे चन्द्रनिरूपितसादृश्यप्रयोजकाभिन्नाह्लादकत्ववन्मुखमिति बोधः। चन्द्रवद्भाति मुखमित्यादौ भाधातोः ज्ञानार्थकत्वेन तदुत्तरवर्त्याख्यातस्य विषयत्वार्थकत्वेन वच्छब्दार्थसादृश्यस्य प्रकारतानिरूपकत्वसम्बन्धेन ज्ञानेन्वये चन्द्रनिरूपितसादृश्यप्रकारकज्ञानविषयो मुखमिति बोधः। चन्द्रवदाह्लादकं भाति मुखमित्यत्र चन्द्रनिरूपितसादृश्यप्रयोजकाह्लादकत्वप्रकारकज्ञानविषयो मुखमिति बोधः। सादृश्यस्य साधारणधर्मतोऽनतिरिक्ततावादिमते प्रयोजकत्वस्थानेऽभेदो ज्ञेयः। एकदेशान्वयानङ्गीकारे चन्द्रवदाह्लादकं मुखमित्यादावाह्लादकपदस्यैव चन्द्रनिरूपितसादृश्यप्रयोजकाह्लादकत्वविशिष्टार्थकत्वं, अन्यस्य तात्पर्यग्राहकत्वं चाङ्गीकार्यं, इवादिशब्दसमभिव्याहारदशायामंवक्रमेण शाब्दबोधा विज्ञेयाः ॥

इत्युवाच नृपं विप्र इत्यादावितिशब्दस्य पूर्वोक्तवाक्यार्थएवार्थः, अस्यच वाचि ज्ञानत्वर्थैकदेशीभूतज्ञाने विषयत्वसम्बन्धेनान्वयः,

तथाच पूर्वोक्तवाक्यार्थविषयकज्ञानजनकशब्दप्रयोगकर्ता विप्र इति बोधः । इत्थमेवमादीनामेवमेवार्थो ज्ञेयः । स्थाणुः पुरुषइति ज्ञात इत्यत्रेतिशब्दस्य प्रकारतानिरूपकत्वमर्थः, पुरुषपदंच पुरुषत्वार्थकं तथाच पुरुषत्वप्रकारकज्ञानाविषयः स्थाणुरिति बोधः । ब्राह्मण इति नमस्करोतीत्यत्रेतिशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकप्रकारकज्ञानहेतुकत्वमर्थः । तथाच ब्राह्मणत्वज्ञानहेतुकनमस्कारकर्तायमिति शाब्दबोधः। तमालइति वृक्षइत्यादावितिशब्दस्याभेदोऽर्थः । तथाच तमालाभिन्नो वृक्ष इति बोधः । ग्रन्थान्ते वर्तमानस्येतिशब्दस्य समाप्तत्वार्थकत्वेन ग्रन्थस्समाप्तइति बोधः । किंपदसमभिव्याहृतेतिशब्दस्य जिज्ञासाविषयहेतुकत्वमर्थः, तथाच किमिति भगवन्तं भजत इत्यादौ जिज्ञासाविषयहेतुकभगवद्विषयकभक्तिमानयमिति बोधः । इतिशब्दस्य क्वचिच्छब्दस्वरूपमप्यर्थः, तथा गवित्याहेत्यत्र गोशब्दस्वरूपाभिन्नज्ञानानुकूलव्यापारानुकूलकृतिमानयमिति बोधः ॥

दृष्ट्वा गतइत्यादौ क्त्वाप्रत्ययान्ताव्ययानामुत्तरकालीनत्वमर्थः, तथाच दर्शनोत्तरकालिकगमनाश्रयोयमितिबोधः, विलोक्य प्रविश्येत्यादिल्यबन्तानामप्येवमेवोत्तरकालीनत्वमर्थः, शाब्दबोधः पूर्ववदेव, तथाच ल्यप्प्रत्ययान्तपदार्थस्य क्त्वाप्रत्ययान्तपदार्थस्यच क्रियासामानाधिकरण्यं क्रियापूर्वभावित्वञ्चावश्यकम् । द्रष्टुंगतइत्यादितुमुन्नन्ताव्ययस्थले तुमुन्प्रत्ययस्येच्छाप्रयोज्यत्वं इच्छाधीनेच्छाविषयत्वंवार्थः, तथाच दर्शनेच्छाप्रयोज्यगमनकर्तायमितिबोधः ॥

सम्यक्पठतीत्यादौ सम्यक्पदार्थश्श्रद्धापूर्वकत्वरूपः, तथाच श्रद्धापूर्वकत्वविशिष्टपठनकर्तायमितिबोधः । सम्यक्स्वपितीत्यादौ जाग्रद्ज्ञानाभावसामानाधिकरण्यं सम्यक्पदार्थः, तथाच जाग्रद्ज्ञानाभावसमानाधिकरणस्वापकर्तायमितिबोधः ॥

सम्यक्फलतीत्यत्र सम्पूर्णत्वम्, सम्यङ्नमस्करोतीत्यत्र भक्ति- पूर्वकत्वम्, सम्यक्पश्यति कान्तामित्यादावनुरागपूर्वकत्वम, सम्य- क्ताडयतीत्यादौ दयाराहित्यपूर्वकत्वञ्च सम्यक्पदार्थः, एवं स्थल- भेदेन सम्यक्पदार्थो ज्ञेयः ॥

—•क्रियाविशेषणस्थले शाब्दबोधविचारः•—

स्तोकं पाचतीत्यादौ स्तोकपदार्थस्याल्पस्य पचत्यर्थीभूतपाकेऽ- भेदसम्बन्धेनान्वये ऽल्पाभिन्नपाकानुकूलकृतिमानयामितिबोधः, सु- खं शेतइत्यादौ सुखपदस्य सुखजनके लक्षणा, तथाच सुखजन- काभिन्नशयनकर्तायमितिबोधः, मधुरंरौति पिकइत्यादौ मधुराभि न्नकूजनकर्ता पिकइतिबोधः ॥

—•जगदाविर्भावविषये मतभेदाः•—

केचन आरम्भवादिनः, केचन परिणामवादिनः, तत्रचा- रम्भवादिनो नैयायिकाः, परिणामवादिनः सांख्याः, तत्रचारम्भ- वादिनः घटादिरूपावयविनः कपालाद्युपादानकारणैर्जन्यन्ते नतु कपालादयएव घटाद्यात्मना परिणमन्ति, अतः कपालादिभ्यो भिद्यन्ते घटादयइति वदन्ति । परिणामवादिनस्तु मृदाद्युपा- दानपरिणामाएव घटाद्यवयविनः, नतूपादानेभ्यो भिद्यन्तेऽवयविन इति वदन्ति ॥

एवं नैयायिका असत्कार्यवादिनः, सांख्यादयस्तु सत्कार्य- वादिनः, स्वोत्पत्तेः प्राक् घटादिकार्यमसदेव कपालादिकारणैर्ज- न्यते इत्यसत्कार्यवादिनामाशयः । मृदाद्युपादानेषु संस्कारात्म ना (सूक्ष्मरूपेण) स्वोत्पत्तेः पूर्वं वर्तमानमेव घटादिकार्यमाविर्भव- तीति सत्कार्यवादिनामाशयः ॥

—प्रत्यक्षादिप्रमाणैः पदार्थसिद्धिविचार.—

त्र्यणुकादिघटपर्यन्तानामवयविरूपाणां पृथिव्यप्तेजसां सिद्धिश्चक्षूरूपेण त्वग्रूपेणच प्रत्यक्षप्रमाणेन सम्भवति, बाह्यद्रव्यप्रत्यक्षं त्वक्चक्षुषोः कारणत्वात्, परमाणुरूपाणां द्व्यणुकरूपाणाञ्च पृथिव्यप्तेजसां सिद्धिस्त्वनुमानप्रमाणेनैव भवति, तथाहि, जालसूर्यमरीचिस्थं सूक्ष्मतममुपलब्धिविषयीभूतं रजः सावयवं चाक्षुषद्रव्यत्वादित्यनुमानेन त्र्यणुकसिद्धिः, त्र्यणुकावयवोपि सावयवः महदारम्भकत्वात्तन्तुवदित्यनुमानेन परमाणुसिद्धिः ।

रूपवद्द्रव्यासमवेतस्पर्शः क्वचिदाश्रितस्स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् ; असति रूपवद्द्रव्याभिघाते पर्णादिषु योयं शब्दसन्तानः सः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् । नभसि तृणतूलस्तनयित्नुविमानानां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनाधिष्ठितद्रव्यधृतित्वात् । नौकाधृतिवत् । रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात् नदपराहतकाशादिकर्मवत् इत्याद्यनुमानैः वायोसिद्धि र्द्रष्टव्या ॥

सुवर्णं तैजसं प्रतिबन्धकाभावविशिष्टात्यन्तानलसंयोगसमानकालीनानुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा घट इत्यनुमानेन सुवर्णस्य तैजसत्वसिद्धिः ॥

घ्राणेंद्रियं पार्थिवं गन्धेतराव्यञ्जकत्वेसति गन्धव्यञ्जकत्वेस-
ति द्रव्यत्वात् कुंकुमगन्धाभिव्यञ्जकगोघृतवत् इत्यनुमानेन घ्राणें-
द्रियस्य पार्थिवत्वं सिद्ध्यति । रसनेंद्रियं जलीयं गन्धाव्यञ्जक-
त्वेसति रसव्यञ्जकत्वेसति द्रव्यत्वात् सक्तुरसाभिव्यञ्जकोदकवत् ।
इत्यनुमानेन रसनेंद्रियस्य जलीयत्वं सिद्ध्यति । चक्षुः तैजसं
परकीयस्पर्शाव्यञ्जकत्वेसति परकीयरूपव्यञ्जकत्वेसति द्रव्यत्वादि-
त्यनुमानेन चक्षुषस्तैजसत्वसिद्धिः ॥

त्वगिन्द्रियं वायवीयं रूपाद्यव्यञ्जकत्वेसति स्पर्शव्यञ्जकत्वे-
सति द्रव्यत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकपवनवदित्यनुमानेन
त्वगिन्द्रियस्य वायवीत्वं सिद्ध्यति पार्थिवपरमाण्वादिषु मणिचन्द्र-
कांतिप्रभृतिषुच पार्थिवत्वादिहेतुभिः गन्धादिसिद्धिर्द्रष्टव्या ॥

शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रित अष्टद्रव्यानाश्रितत्वे
सति द्रव्याश्रितत्वादित्यनुमानेन शब्दस्य पृथिव्याद्यष्टद्रव्यातिरिक्तद्र
व्याश्रितत्वं सिद्ध्यति । शब्दो द्रव्यसमवेतः गुणत्वात् संयोगव-
दित्यनुमानेन शब्दसमवायितयाकाशसिद्धिः । शब्दो न स्प-
र्शवद्विशेषगुण अग्निसंयोगासमवायिकारणकत्वाभावेसति अकारणगु
णपूर्वकप्रत्यक्षविषयत्वात् सुखवत्, पाकजरूपादौ व्यभिचारवार-
णाय सत्यन्तम्, पटरूपादौ व्यभिचारवारणाय विशेष्यम्, जलप-
रमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति, अनेनचानुमानेन पृथि-
व्यादिचतुष्टये शब्दाश्रयत्वाभावः सिद्ध्यति, शब्दो नदिक्कालमन
सां गुणः विशेषगुणत्वात, शब्दो नात्मविशेषगुणः बाहिरिंद्रिय-
ग्राह्यत्वात् इत्यनुमानद्वयेन कालादिचतुष्टये शब्दाभावः सिद्ध्यति
शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबाहिरिन्द्रियग्राह्यजातिमत्वात् स्प-

शब्दवत् इत्यनुमानेन शब्दे विशेषगुणत्वं सिद्ध्यति, अतः पूर्वानुमानेन शब्दसमवायितया प्रतीयमानं द्रव्यमाकाशमेवेति सिद्धम् ॥

कालिकपरत्वापरत्वे समवायिकारणे (असमवायिकारणजन्ये) जन्यगुणत्वादित्यनुमानेन कालिकपरत्वापरत्वसमवायिकारणीभूतकालपिण्डसंयोगाश्रयत्वेन कालसिद्धिः ॥

दिक्कृतपरत्वापरत्वे समवायिकारणे जन्यगुणत्वात् रूपवदित्यनुमानेन तदुभयासमवायिकारणीभूतदिक्पिण्डसंयोगाश्रयतया दिक्सिद्धिर्द्रष्टव्या ॥ घटाकाशो मठाकाशः अतीतकालः अनागतकाल. प्राची प्रतीचीत्यादिव्यवहाराणामाकाशकालदिशामनेकत्वभासकानां घटपटादिरूपोपाधिनिमित्तकत्वेन वास्तविकानन्त्यमाकाशकालदिशां नास्त्येवेति बोध्यम् ॥

अहं सुखी अहं दुःखी इत्यादिप्रतीतिविषयीभूताहंपदार्थस्यैव जीवात्मतया मनोरूपप्रत्यक्षप्रमाणेन शरीरेन्द्रियाणि कर्तृजन्यकार्यजनकानि करणत्वात्कुठारादिवदित्यनुमानेनच जीवात्मसिद्धिर्द्रष्टव्या । परदेहादौ चेष्टा प्रयत्नसाध्या चेष्टात्वात् मदीयचेष्टावदित्यनुमानेन चेष्टासाधनप्रयत्नाश्रयत्वेन परजीवात्मसिद्धिर्द्रष्टव्या ॥

क्षित्यंकुरादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन क्षित्यंकुरादिकर्तृतया, यस्सर्वज्ञस्ससर्ववित् ,विश्वस्य कर्ता भुवनस्य गोप्तेत्यादिशब्दप्रमाणेनचेश्वरसिद्धिः ॥

सुखादिसाक्षात्कारः सासमवायिकारणः जन्यगुणत्वादित्यनुमानेन सुखादिसाक्षात्कारासमवायिकारणात्ममनस्संयोगाश्रयत्वेन मनसस्सिद्धिः, अमुमेवार्थं आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षमुत्पद्यतइति न्यायस्सूचयति ॥

एवं द्रव्यसिद्धिर्निरूपिता ॥

इदानीं गुणादिसिद्धिः निरूप्यते । त्र्यणुकाद्यवयविगतरूपा- दिचतुष्टयस्य त्वक्चक्षूरूपप्रत्यक्षप्रमाणेनैव सिद्धिः । त्र्यणुकगत- रूपादिचतुष्टयं सासमवायिकारणं जन्यगुणत्वात् इत्यनुमानेन त्र्यणु करूपादिचतुष्टयासमवायिकारणीभूतद्व्यणुकगतरूपादिचतुष्टयसिद्धिः। द्व्यणुकगतरूपादिचतुष्टयं सासमवायिकारणं जन्यगुणत्वादित्यनुमाने न परमाणुगतरूपादिचतुष्टयस्य सिद्धिरवगन्तव्या ॥

त्र्यणुकादिषु वर्तमाना एकत्वद्वित्वादिसंख्या कुत्रचित्त्वचा कु त्रचिच्चक्षुषा च अयमेक इमौ द्वौ इति प्रत्यक्षप्रतीतितो गृह्यते । त्र्य- णुकगतपरिमाणं सासमवायिकारणं जन्यपरिमाणत्वात् द्व्यणुकगतप- रिमाणं सासमवायिकारणं जन्यपरिमाणत्वादित्यनुमानद्वयेन द्व्यणुक- गतत्रित्वसंख्यायाः परमाणुगतद्वित्वसंख्यायाश्च सिद्धिः । अथवा अ- णुपदार्थेष्वेकत्वादिपरार्थपर्यन्तायास्संख्यायाश्शब्दप्रमाणेनैव सिद्धिरव- गन्तव्या ॥

त्र्यणुकादिघटपर्यन्तेऽवयविषु परिमाणं चक्षुरादिप्रत्यक्षप्रमा- णेन गृह्यते, त्र्यणुकपरिमाणं सासमवायिकारणं जन्यगुणत्वात् रूपवत्, द्व्यणुकपरिमाणं सासमवायिकारणं जन्यगुणत्वात् इत्यनु मानद्वयेन द्व्यणुकगतस्य परमाणुगतस्य चाणुपरिमाणस्य सिद्धिर्नकथ मपि निरूपयितुं शक्या, पारिमाण्डल्यभिन्नानां कारणत्वस्य साध- र्म्यमुपपादयता विश्वनाथपञ्चाननभट्टाचार्येण परिमाणमात्रस्य स्वस- मानजातीयस्वोत्कृष्टपरिमाणजनकत्वमित्यादियुक्तिभिः अणुपरिमाणे का रणत्वस्य निराकृतत्वात् नच त्र्यणुकादिपरिमाणस्य महत्स्वरूपतया

द्व्यणुकपरिमाणस्याणुत्वरूपतया द्वयोस्सजातीयत्वाभावेन परिमाणमात्र-स्येति नियमेन द्व्यणुकपरिमाणस्य त्र्यणुकपरिमाणजनकत्वासम्भवेन त्र्यणुकपरिमाणं सासमवायिकारणमित्यनुमानेन द्व्यणुकपरिमाणसि-द्ध्यभावेपि द्व्यणुकपरमाणुपरिमाणयोरणुत्वरूपतया साजात्येन द्व्यणुक परिमाणं सासमवायिकारणमित्यनुमानतः परमाणुपरिमाणं सिद्ध्यतीति वाच्यम्, अपकृष्टमहत्त्वंप्रत्यनेकद्रव्यत्वस्य [समवेतसमवेतवृत्तिद्रव्य-त्वस्य] प्रयोजकत्वात् त्र्यणुकपरिमाणंप्रति अनेकद्रव्यत्वस्यैव प्रयो जकत्वाङ्गीकारेण त्र्यणुकपरिमाणं सासमवायिकारणमित्यनुमानेन त्र्यणुकपरिमाणकारणत्वेन द्व्यणुकपरिमाणस्यैवासिद्धतया तदसम-वायिकारणत्वेन परमाणुपरिमाणस्यासिद्धेः दुर्निरूपत्वात्, नच पर माणुद्व्यणुकयोः परिच्छिन्नपरिमाणवत्त्वरूपमूर्तत्वव्यवहारान्यथानुपपत्त्या परिशेषादुभयत्राप्यणुपरिमाणं सिद्ध्यतीति वाच्यम, क्रियाश्रयत्व-रूपमूर्तत्वेनापि मूर्तत्वव्यवहारोपपत्तेः तत्र परिमाणानङ्गीकारेपि बा-धकाभावात्, नच परिमाणान्तरोत्पादकत्वरूपप्रयोजनाभावेपि विभु पदार्थेषु परिमाणमिव परपाणुद्व्यणुकयोरप्यणुपरिमाणमङ्गीक्रियते इति वाच्यम, सर्वत्र शब्दोपलब्ध्यन्यथानुपपत्त्या गगने सर्वत्रेदानींघट स्तदानीं घटइत्यादिप्रत्यक्षप्रतीत्यन्यथानुपपत्त्या काले सर्वत्रायं प्रा, च्योऽयं प्रतीच्य इत्यादिप्रत्यक्षप्रतीत्यन्यथानुपपत्त्या दिशिच| परम-महत्परिमाणस्याङ्गीकृतत्वेन गगनादित्रिके विद्यमानस्य परिमाणस्य किञ्चिदुत्पादकत्वरूपप्रयोजनाभावेपि प्रयोजनान्तरवत्त्वेन द्व्यणुकादि-परिमाणस्येव निष्प्रयोजनत्वाभावात्, नच गगनादित्रिके महत्वां गीकरणे निरुक्तप्रयोजनसत्वेपि आत्मनि परिमाणाङ्गीकारे नकिञ्चि दपि प्रयोजनमिति वाच्यम, जीवात्मनि मध्यमपरिमाणाङ्गीकारे यन्मध्यमपरिमाणवत्तदनित्यमिति व्याप्त्या अनित्यत्वप्रसङ्गेन अणुप-रिमाणाङ्गीकारे सर्वशरीरावच्छेदेन सुखाद्युपलब्ध्यसम्भवप्रसङ्गेन त,

त्र महत्वपरिमाणस्यैवानङ्गीकारे प्रत्यक्षे महत्वस्यकारणत्वेनात्मतद्ग. तसुखादिप्रत्यक्षानुपपत्त्याच जीवात्मनि परममहत्परिमाणस्य अङ्गी. करणीयत्वेन सर्वजगत्कारणत्वान्यथानुपपत्त्या परमात्मनिच विभुपरि माणस्यावश्यमङ्गीकरणीयत्वेनात्मपरिमाणस्यापि सप्रयोजनत्वात् , नि. ष्प्रयोजनत्वेन द्व्यणुकपरमाणुपरिमाणयोः एव सिद्धिर्नसम्भवतीति न वाच्यम् ; द्व्यणुकं परमाणुर्वा परिमाणवान् द्रव्यत्वादित्यनुमानेन तयो रपि परिमाणस्याङ्गीकृतत्वात् , नच परमाण्वादावपि द्रव्यत्वसाम्ये. न घटादाविव कुतो नमहत्वपरिमाणमङ्गीक्रियतइति वाच्यम , तदङ्गी कारे तयोः प्रत्यक्षत्वापत्तेः,अपकृष्टमहत्वप्रयोजकस्यानेकद्रव्यत्वस्याभावे. नच तत्र महत्वस्यानङ्गीकरणीयत्वात् , नच त्र्यणुकं सपरिमाणं द्रव्य. त्वादित्यनुमानेन द्व्यणुके परिमाणसिद्धौ द्व्यणुकपरिमाणं सासम वायिकारणं जन्यगुणत्वादित्यनुमानेन कुतो न परमाणुपरिमाणस्य सिद्धिरिति वाच्यम् , द्व्यणुकपरिमाणस्य परमाणुपरिमाणजन्यत्वे "परिमाणमात्रस्येति नियमानुसारेण द्व्यणुकपरिमाणस्य परमाणुपरि- माणत उत्कर्षावश्यंभावेन परमाणुतो द्व्यणुकस्याणुतरत्वप्रसङ्गात् , नच निरुक्तानुमानाभ्यां द्व्यणुकपरमाण्वो रनुपरिमाणसिद्धावपि तत्परि. माणाङ्गीकारेण न किमपि प्रयोजनमस्तीति वाच्यम् , यत्र द्रव्यत्वं तत्र परिमाणमिति व्याप्यव्यापकभावभङ्गवारणस्यैव प्रयोजनत्वात् , तथाच परमाणुः सपरिमाणः द्रव्यत्वाद्घटवत् , द्व्यणुकं सपरिमाणं द्रव्यत्वाद्घटवदित्यनुमानाभ्यां द्व्यणुकपरमाण्वोरपि परिमाणसिद्धिर्द्र दृष्टव्या ॥

त्र्यणुकादिघटपर्यन्तेष्ववयविषु अयमस्मात्पृथगिति प्रात्यक्षिक. व्यवहारेण पृथक्त्वसिद्धिः । पृथक्त्वद्रव्यानुयोगिकभेदयोस्समनैय. त्येन अयंपरमाणुः इतराभिन्नः एतद्विशेषादित्याद्यनुमानैः परमाण्वादि. ष्वितरभेदसिद्धौ अयं परमाणुः स्वेतरेभ्यः पृथक्पृथक्त्वसमनियतद्.

व्यानुयोगिकभेदाश्रयत्वात् इत्याद्यनुमानैः परमाणुष्वपि पृथक्त्वसिद्धि., द्व्यणुकेष्वेवमेव पृथक्त्वसिद्धिर्द्रष्टव्या । त्र्यणुकादिपृथक्त्वं सासमवायिकारणं जन्यगुणत्वादित्यनुमानेनवा परमाण्वादिषु पृथक्त्वसि. द्धिर्द्रष्टव्या ॥

त्र्यणुकादिषु इमौ संयुक्ताविति प्रत्यक्षेण संयोगसिद्धिः ॥ त्र्यणुकं सासमवायिकारणं जन्यद्रव्यत्वात्, द्व्यणुकं सासमवायि. कारणं जन्यद्रव्यत्वादित्यनुमानद्वयेन द्व्यणुकसंयोगस्य परमाणुसंयोगस्यच सिद्धिर्द्रष्टव्या ॥

त्र्यणुकादिषु इमौविभक्ताविति व्यवहारेण प्रत्यक्षसिद्धेन विभागसिद्धिः । द्व्यणुकं द्व्यणुकान्तरात् विभक्तं त्र्यणुकनाशवत्वात् ध्वंस. प्रागभावयोस्स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमेन न स्वरूपासिद्धिः अनेनच अनुमानेन द्व्यणुकद्वयविभागस्सिध्यति, द्व्यणुकं नाशप्र. तियोगि जन्यभावत्वादित्यनुमानेन द्व्यणुकनाशसिद्धौ परमाणुः परमाण्वन्तराद्विभक्तः द्व्यणुकनाशवत्त्वादित्यनुमानेन परमाणुद्वयविभागस्सिध्यति ॥

त्र्यणुकादिषु अयंपरः अयमपरइति व्यवहारात्परत्वापरत्वयो. स्सिद्धिः । त्र्यणुकपरत्वापरत्वे सासमवायिकारणे जन्यगुणत्वात् द्व्यणुकपरत्वापरत्वे सासमवायिकारणे जन्यगुणत्वादित्यनुमानाभ्यां द्व्यणुकपरमाणुगतयोः परत्वापरत्वयोः सिद्धिर्द्रष्टव्या ॥

त्र्यणुकादिषु अयं गुरुत्ववान् आद्यपतनवत्त्वादित्याद्यनुमानेन गुरुत्वसिद्धिः । त्र्यणुकादिगुरुत्वं सासमवायिकारणं जन्यगुणत्वादित्यनुमानप्रमाणेन द्व्यणुकपरमाण्वोरपि गुरुत्वसिद्धिर्द्रष्टव्या ॥

त्र्यणुकादिषु इदं द्रवं इति प्रतीत्या द्रवत्वसिद्धिः, त्र्यणु. कनिष्ठं द्व्यणुकनिष्ठं वा द्रवत्वं सासमवायिकारणं जन्यगुणत्वात् इत्यनुमानतः द्व्यणुकपरमाण्वोरपि द्रवत्वसिद्धिः ॥

त्र्यणुकादिष्वपि इदं स्नेहवत् पिण्डीभावजनकत्वादित्यनुमानेन स्नेहसिद्धिः । त्र्यणुकादिस्नेहः सासमवायिकारणः जन्यगुणत्वादित्याद्यनुमानेनद्व्यणुकपरमाण्वोरपि स्नेहसिद्धिः ॥

अयं ध्वन्यात्मकश्शब्दः अयं वर्णात्मकश्शब्दः इति व्यवहारेण श्रोत्रेन्द्रियरूपप्रत्यक्षप्रमाणासिद्धेन श्रोत्रदेशोत्पन्नशब्दस्य सिद्धिः, अयं शब्दः सासमवायिकारणः जन्यगुणत्वादित्याद्यनुमानैः उत्तरोत्तरशब्दासमवायिकारणीभूतानां पूर्वपूर्वशब्दानां सिद्धिर्भवति, नतु श्रोत्रोत्पन्नशब्दातिरिक्तानां पूर्वपूर्वशब्दानां प्रत्यक्षतो ग्रहणं तेषु श्रोत्रावच्छिन्नसमवायाभावात् ॥

ज्ञानविषयकसाक्षात्कारोऽनुव्यवसायः । उत्तरोत्तरोत्पन्नानुव्यवसायेन पूर्वपूर्वोत्पन्नज्ञानं गृह्यते, यथा घटं जानामीत्यनुव्यवसायेन घटज्ञानसामान्यस्य सिद्धिः, घटं स्मरामि अनुभवामि यथार्थतो जानामि साक्षात्करोमि अनुमिनोमि उपमिनोमि शब्दात्प्रत्येमि सन्दिहे निश्चिनोमि तर्कयामि सम्भावयामि इत्याद्यनुव्यवसायैः मानसिकप्रत्यक्षरूपैः मनोरूपप्रत्यक्षप्रमाणजन्यैः स्मरणादीनां प्रत्यक्षं भवति । निर्विकल्पकस्यातीन्द्रियत्वेन गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् इत्यनुमानेन विशिष्टज्ञानजनकीभूतविशेषणज्ञानरूपं निर्विकल्पकज्ञानं सिध्यति, नचास्य ज्ञानस्य ज्ञानत्वभङ्गः ज्ञानत्वव्यापकसविषयकत्वाभावादिति वाच्यम्, तत्र प्रकारत्वादिविषयतात्रयाभावेपि तुरीयविषयताख्याया विषयतायाः तस्य सविषयकत्वभङ्गवारणायाङ्गीकृतत्वात् ॥

ज्ञाननिष्ठं प्रामाण्यं स्वतो ग्राह्यमिति मीमांसका वदन्ति, अत्र प्रामाण्यं तद्वति तत्प्रकारकत्वरूपं प्रमात्वमेव, नतु प्रमाकरणत्वरूपं प्रामाण्यं अत्र विवक्षितं, सर्वत्र प्रत्यक्षादिज्ञानेषु प्रमाकरणत्वरूपस्य प्रामाण्यस्य बाधितत्वात् ॥

स्वतोग्राह्यत्वञ्च तदप्रामाण्यग्राहकज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं, तच्च तदप्रामाण्याग्राहिका या ज्ञानग्राहिका सामग्री तज्जन्ययावद्ग्रहविषयत्वमिति, तथाच यावत्पदस्य व्यापकत्वार्थकतया तत्प्रामाण्यग्राहकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकीभूतविषयताश्रयत्वमिति फलितम् ,तदर्थः तदप्रामाण्यग्राहिका तद्धर्मप्रकारकज्ञानग्राहिकायासामग्री तज्जन्यग्रहत्वव्यापकीभूता या विषयता तदाश्रयत्वमिति । गुरूणां मुरारिमिश्राणां भट्टानाञ्च मतेषु त्रिष्वपि स्वतोग्राह्यत्वं ज्ञानसाधारणं भवति, तथाहि गुरुमते सर्वेष्वपि ज्ञानेषु ज्ञानज्ञातृज्ञेयरूपत्रयं भासते, तन्मतेऽयंघटइत्यादिघटमात्रावगाहिज्ञानं नास्त्येव अस्मिन् ज्ञाने ज्ञेयविषयकत्वस्य सम्भवेपि ज्ञानज्ञातृविषयकत्वाभावात् , अतो गुरुमते सर्वमपिज्ञानं निरुक्तत्रितयविषयकं अयं घटः घटमहं जानामीत्यादिरूपं ज्ञेयम्, घटं जानामीत्यस्य घटविषयकज्ञानवानहमित्यर्थः, अस्मिन् ज्ञाने घटरूपं ज्ञेयं, घटज्ञानरूपं ज्ञानं अहंपदार्थजीवरूपो ज्ञाताचेतत्त्रितयं विषयीभवति । मिश्रमते घटइति ज्ञानानन्तरं घटमहं जानामीत्यनुव्यवसायोऽङ्गीक्रियते, अस्मिन् मते व्यवसायोत्पत्त्यनन्तरमनुव्यवसाय उत्पद्यते तेनच प्रामाण्यं गृह्यते, अनुव्यवसायोनाम ज्ञानविषयकं मानसं प्रत्यक्षं, अस्मिन् ज्ञानेऽपि निरुक्तत्रितयं विषयीभवति । भाट्टमते ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमितेरेव प्रामाण्यं गृह्यते, ज्ञातताच सविषयको ज्ञानजन्यः प्रत्यक्षविषयीभूतः ज्ञानविषयत्वातिरिक्तो घटादिनिष्ठः कश्चन पदार्थइति तन्मतं, अनुमानप्रयोगस्तु, घटः घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्वात् यन्नैवं तन्नैवं यथा पट इति ॥

अथवा ज्ञाततां पक्षीकृत्य इयं ज्ञातता घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञातातात्वात् या यद्वृ.

त्तिः यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या यथा पटे पटत्वप्रकारिका ज्ञाततेति, अत्र मतत्रयेऽपि व्यावसायानुव्यवसायानुमितिषु ज्ञानस्य विषयत्वेन तद्ज्ञानगतज्ञानत्ववद् ज्ञानत्वसम. शीलस्य ज्ञाननिष्ठप्रामाण्यस्यापि विषयत्वे बाधकाभावात् घटादिज्ञाननिष्ठप्रामाण्यमपि विषयीभवतीत्यङ्गीक्रियते, तथाच मतत्रयेऽपि प्रामाण्ये स्वतोग्राह्यत्वस्य ,लक्षणसमन्वयप्रकार इत्थं, गुरुमते मिश्रमतेच तत्पदेन यस्मिन् घटादिज्ञाने प्रामाण्यं गृह्यते तद्घटादिज्ञानं ग्राह्यं तस्मिन्प्रामाण्यज्ञानं तदप्रामाण्यज्ञानं इत्यनेन घटादिज्ञानविशेष्यकाप्रायाण्यप्रकारकज्ञानं लभ्यते तदग्राहिका ज्ञानग्राहिका या सामग्री आत्ममनस्संयोगविशेषणज्ञानादिरूपा सामग्री तज्जन्यग्रहः घटमहं जानामीत्याकारको ग्रहः तद्विषयत्वं घटज्ञानत्वइव तत्समशीले प्रामाण्येऽपि वर्ततइति । भाट्टमते तदप्रामाण्याग्राहिका प्रकृतज्ञानग्राहिका या सामग्री इत्युक्तौ आत्ममनस्संयोगपरामर्शादिरूपा सामग्री तज्जन्यो याग्रहः घटः घटविशेष्यकघटत्वप्रकारकज्ञानविषय इत्याकारकानुमितिरूपो ग्रहः तद्विषयत्वं ज्ञानत्वइव तत्समशीले प्रामाण्येमि वर्ततइति । नैयायिकास्तु अयं घटइति ज्ञानोत्तरं घटमहंजानामीत्यनुव्यवसायस्य सम्भवेऽपि न तस्मिन् ज्ञाने तत्प्रामाण्यस्य विषयत्वं सम्भवति, अन्यथा ज्ञानत्वसमशीलानां तद्व्यक्तित्व. तद्गुणत्वप्रत्यक्षत्वादीनामपि तद्ज्ञानविषयताप्रसङ्गात्, किञ्च अनुव्यवसायादिनैव प्रामाण्यस्य ग्रहणे अनभ्यासदशायां (प्राथमिकघटा. दिग्रहोत्तरदशायां) इदं प्रमावा नवेति प्रामाण्यसंशयो नस्यात्, अतः प्रामाण्यं परतोग्राह्यमेवेति वदन्ति, परतोग्राह्यत्वञ्च अनुमानादिग्राह्यत्वम्, यज्जातीयज्ञानोत्तरं जायमाना प्रवृत्तिस्सफला भवति, यथा अयं घटः इदं रजतं इत्यादिज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात्

ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् पूर्वोत्पन्नज्ञानवदित्यन्वयव्यतिरेकि-णापि प्रामाण्यं गृह्यते ॥

नच शब्दवदाकाशमित्यादिज्ञानानां प्रवृत्तिजनकत्वाभावेन प्रमात्वं कथं सिध्यतीति वाच्यं, अनुमानशब्दान्यतरग्राह्यत्वस्यैव परतो ग्राह्यत्वरूपत्वेन वक्तव्यतया शब्दवदाकाशमित्यादिज्ञानं प्रमा इत्याप्तवाक्येभ्यः तत्तद्ज्ञानेषु प्रामाण्यसिद्धेरप्रत्यूहत्वात्, नच यत्र रजते इदं रजतमिति ज्ञानं जात प्रवृत्तिस्तु नजाता तत्र प्रमात्वं दुर्निरूपमिति वाच्यं, यत्र प्रवृत्त्यादिकमाप्तवाक्यंवा नास्ति तत्र वास्तविकप्रमात्वसत्वेपि प्रामाण्यसंशयस्यैव सत्वेन प्रामाण्यनिश्चयानुत्पत्तेरिष्टत्वात्, अथवा तादृशज्ञाने प्रवृत्तिफलोपधायकत्वाभावेऽपि प्रवृत्तिस्वरूपयोग्यताया अक्षतत्वेन एतेनैव लिङ्गेन तत्रापि ज्ञाने प्रमात्वनिर्णयस्सूपपादएव । सर्वमतेष्वपि इदं ज्ञानं अप्रमा विफलप्रवृत्तिजनकत्वात् इत्याद्यनुमानैरेवाप्रामाण्यसिद्धिरेष्टव्या । ज्ञातो घटइत्यादौ ज्ञातताया ज्ञानविषयतारूपत्वेनैवोपपत्तौ सविषयकाया ज्ञातताया: पार्थक्यं न कल्पनीयं गौरवान्मानाभावाच्च ॥

अहं सुखी, अहं दुःखी, अहमिच्छामि, अहं द्वेष्मि, अहं करोमीत्यादिमानसप्रत्यक्षैः आत्मीयास्सुखदुःखेच्छाद्वेषप्रयत्ना गृह्यन्ते। परकीयं बुद्ध्यादिषट्कन्तु मुखसङ्कोचविकासादिना अनुमीयते, तथाहि, अयं घटविषयकज्ञानवान् घटविषयकेच्छावत्त्वात्, अयं घटविषयकेच्छावान् घटविषयककृतिमत्त्वात्, अयं घटविषयककृतिमान् कपालविषयककृतिमत्त्वात्, अयं सुखवान् सुखविकासवत्त्वात्, अयं दुःखवान् मुखसङ्कोचवत्वात् इति । अयं सुखी अयं दुःखीत्याद्याप्तवाक्यैर्वा परकीयं बुद्ध्यादिषट्कं गृहीतुं शक्यते । धर्माधर्मभावनाख्यसंस्काराणां आत्मीयानां परकीयानां वा सिद्धिस्तु अयं धर्मवान् अहं धर्मवान् वा ऐश्वर्यसुखादिमत्त्वात् अयम-

धर्मवानहमधर्मवान्वा निर्धनत्वात् दुःखित्वाच्च, अयमहंवा भावना. ख्यसंस्कारवान् स्मृतिमत्वात् प्रत्यभिज्ञावत्वाद्वा इत्याद्यनुमानैरेव भवति ॥

त्र्यणुकादिवेगः प्रत्यक्षसिद्धः, त्र्यणुकादिवेगः सासमवायि. कारणः जन्यगुणत्वादित्याद्यनुमानतः द्व्यणुकपरमाण्वोरपि वेगसिद्धिः द्रष्टव्या कटादिषु अयं स्थितस्थापकसंस्कारवान् विलक्षणक्रियावत्वा· दित्यनुमानेन स्थितस्थापकसंस्कारसिद्धिर्द्रष्टव्या । कटाद्यवयवेषु परमाणुपर्यन्तेषु कटादिनिष्ठस्थितस्थापकः सासमवायकारणः जन्य. गुणत्वादित्याद्यनुमानैः स्थितस्थापकसंस्कारस्य सिद्धिर्द्रष्टव्या, एवं गु णसिद्धिः निरूपिता ॥

इदं चलति इत्यादिचाक्षुषप्रत्यक्षेण त्र्यणुकादिनिष्ठं कर्म गृह्यते, त्र्यणुकं द्व्यणुकंवा सासमवायिकारणं इत्यनुमानतः द्व्यणुक. संयोगस्य परमाणुसंयोगस्यच सिद्धौ कर्मणस्संयोगसमवायकारणत्वे न त्र्यणुकादिसंयोगस्सासमवायिकारणइत्याद्यनुमानतः द्व्यणुकपरमा. ण्वोरपि क्रियासिद्धिः, हस्तादिनिष्ठस्योत्क्षेपणादिपञ्चकस्य प्रत्यक्ष तो ग्रहणे तदुत्क्षेपणं सासमवायिकारणं इत्याद्यनुमानैः तदवयवे· ष्वपि परमाणुपर्यन्तेषु उत्क्षेपणादीनां सिद्धिर्द्रष्टव्या, एवं कर्म. सिद्धिः ग्राह्या ॥

—•अथ जातिसिद्धिर्निरूप्यते •—

पदार्थत्वं न जातिः समवायादिवृत्तित्वात् , द्रव्यत्वं, गुणत्वं, कर्मत्वञ्च जातिरेव, जतुघृतकाष्ठादिषु द्रव्यत्वव्यवहाराभावेन न प्रत्यक्षतो द्रव्यत्वजातिसिद्धिस्सम्भवति, किन्त्वनुमानेनैव अनुमानप्र· कारः, संयोगविभागादिसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कार णतात्वात् घटनिरूपितदण्डनिष्ठकारणतावदित्यनुमानेन विभागादि.

समवायकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः, नच स धर्मो घटत्वादिर्भवितुमर्हति, कारणतायामन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वेन घटत्वपटत्वादिव्याप्यजातीनां विभागादिसमवायकारणताया अन्यूनत्वाभावेन सत्ताजातेस्तदनतिप्रसक्तत्वाभावेन गुणत्वादिजातिषु विभागादिकारणत्वप्रसक्तेरेवाभावेन च तत्कारणताया अन्यूनानतिप्रसक्तधर्मः द्रव्यत्वमेव भवतीति तत्सिद्धिर्बद्रष्टव्या । नच द्रव्यत्वस्य तत्कारणतायामन्यूनानतिप्रसक्तत्वेपि तस्य जातित्वे प्रमाणाभावइति वाच्यम्, वह्निव्याप्यधूमवानिति परामर्शस्य सत्त्वेपि महानसीयवह्नितरवह्न्यभाववानितीतरबाधसहकारेण महानसीयवह्निमानित्यनुमितिरिव अनेकसमवेतस्य द्रव्यत्वस्य जातित्वे लाघवं इति लाघवज्ञानसहकृतात् किञ्चिद्धर्मावच्छिन्नत्वव्याप्यकारणतात्ववती विभागादिसमवायकारणता इति परामर्शात् तत्कारणतावच्छेदकतया जातिरूपद्रव्यत्वमेव सिध्यति ॥

एवमेव गुणपदशक्यता किंचिद्धर्मावच्छिन्ना शक्यतात्वात् घटपदशक्यतावत् इत्यनुमानेन गुणत्वजातिसिद्धिः । अस्यापि प्रत्यक्षप्रमाणतो जातित्वासिद्धौ दुःखद्वेषादिषु गुणत्वव्यवहाराभावो मूलमित्यवधेयम् । कर्मत्वजातिस्तु चलतीत्यादिप्रत्यक्षसिद्धैव ॥

सामान्यादिचतुष्टये जातिर्नास्ति, तथाहि, घटत्वपटत्वादिजातिषु जातित्वरूपजातिस्वीकारे जातित्वस्यापि जातित्वेन तादृशजातित्वे घटत्वादौच पुनर्जातित्वजातिः स्वीकार्या, यथा स्वीकारे घटत्वादौ तन्निष्ठजातित्वे एतज्जातित्वनिष्ठजातित्वेच पुनर्जातित्वजातिस्वीकारापत्तिः इत्यनवस्थाप्रसङ्गइति सामान्ये जातिर्नाङ्गीक्रियते ॥

विशेषेषु विशेषत्वजातिस्वीकारे निस्सामान्यत्वेसति सामान्यभिन्नत्वेसति समवेतत्वमिति विशेषलक्षणस्य भङ्गः प्रसज्येतेति रूपहानिरूपदोषप्रसक्तेः विशेषेषु जातिर्नाङ्गीक्रियते, रूपहानिर्नाम लक्ष

णहानिः । रूपहानिपदस्य स्वतो व्यावर्तकत्वात्मकस्य रूपस्य हानिः इत्यर्थान्तरं प्रकल्प्य तस्य जातिबाधकतां वदन्ति बहवः, तत्प्रकारः, घटादिद्व्यणुकपर्यन्तेष्ववयविषु स्वावयवसमवेतत्वरूपहेतुना इतरभेदस्साधयितुं शक्यते, तत्प्रकारः, घटः इतरभिन्नः कपालसमवेतत्वात्, द्व्यणुकं स्वेतरभिन्नं परमाणुसमवेतत्वादित्यादिना घटादिद्व्यणुकान्तेष्वितरभेदस्साधयितुं शक्यते, परमाणूनामवयवाभावेन परमाणुष्वितरभेदसाधको नैतादृशो हेतुस्सम्भवति, अतस्सर्वेष्वपि परमाणुषु प्रत्येकमेकैकं विशेषमङ्गीकृत्य सर्वपरमाणुषु प्रत्येकं अयं परमाणुः इतराभिन्न एतद्विशेषादित्याद्यनुमानैः तेष्वितरभेदः साधनीयः, एवंस्थिते, विशेषेषु विशेषत्वजातिस्वीकारे सामान्याश्रयस्य सामान्यरूपेणैव साध्यसाधकत्वमिति नियमेन सामान्यात्मकविशेषत्वरूपेणैव विशेषाणां हेतुता वाच्या, नतु सामान्यानात्मकेनैतद्विशेषत्वरूपेण, अयं परमाणुः, इतरभिन्नः विशेषादिति सामान्यरूपेण हेतुतास्वीकारेतु इतरभेदाभाववत्यन्यपरमाणावपि विशेषरूपहेतोस्सत्वाद्व्यभिचारप्रसङ्गः, अतो विशेषेषु जातिर्नाभ्युपेया । विशेषेष्वपि अयं विशेष इतराभिन्नः तादात्म्यसम्बन्धेनैतद्विशेषात् इत्याद्यनुमानैः सर्वविशेषेषु प्रत्येकमितरभेदस्साधनीयः, एवञ्च स्वतो व्यावर्तकत्वं सम्भवति, स्वतो व्यावर्तकत्वंच स्ववृत्त्यसाधारणधर्मपुरस्कारेण व्यावर्तकत्वं सच असाधारणधर्मः एतद्विशेषत्वादिः । नचैवं अयं परमाणुः इतराभिन्नः तादात्म्यसम्बन्धेनैतत्परमाणोः, अयं परमाणुः इतरभिन्नः समवायसम्बन्धेनैतद्रूपादित्याद्यनुमानैरेव परमाणुष्वितरभेदसिद्धौ विशेषांगीकरणमनावश्यकमिति वाच्यम्, एतत्परमाण्वेतद्रूपादिहेतुभिरितरभेदसाधने सामान्याश्रयस्य सामान्यरूपेण साध्यसाधकत्वनियमभङ्गप्रसङ्गात्, परमाणुत्वरूपत्वादिहेतुभिस्सामान्यरूपैस्साधनेच व्यभिचारप्रसङ्गात्, अतः परमाणुष्वित

रभेदसाधनार्थं विशेषा अङ्गीकर्तव्याः, विशेषेषुच जातिर्नस्वीका. र्येतिच सिद्धम् ॥

असम्बन्धः समवायाभावयोर्जातिस्वीकारे बाधकः, असम्बन्धो नाम समवायप्रतियोगित्वसमवायानुयोगित्वान्यतराभावः, समवायाभा. वयोः कस्यापि पदार्थस्य समवायसम्बन्धेनावर्तमानत्वेन तयोस्समवा येन कस्यापि पदार्थस्य अनाधिकरणत्वेनच निरुक्तान्यतराभावस्स. म्भवतीति समवायाभावयोर्नजातिस्स्वीकरणीया । एवं गगनत्वा. दिकं न जातिः एकव्यक्तिवृत्तित्वात् घटत्वं कलशत्वभिन्नजातित्वा. भाववत् कलशत्वसमनियतत्वात् , इत्याद्यनुमानैर्घटत्वादीनां भिन्न. जातित्वं न सिद्ध्यति। तत्र व्यक्त्यभेदतुल्यत्वयास्सत्वात् , एवं भू तत्वशरीरत्वेन्द्रियत्वोद्भूतत्वादीनां क्रमेण मूर्तत्वपृथिवीत्वशुक्लत्वादि. ना साङ्कर्यान्नैव जातित्वं, परस्परात्यन्ताभावसमानाधिकरणयोः धर्म. योः एकत्र समावेशः सङ्करः मूर्तत्वाभाववति गगने भूतत्वं, भूत. त्वाभाववति मनसि मूर्तत्वं उभयोस्समावेशः पृथिव्याद्यन्तर्भावेण व. र्ततइति मूर्तत्वसांकर्येण भूतत्वस्य न जातित्वम् । पृथिवीत्वाभावव. ति जलीयशरीरे शरीरत्वं, शरीरत्वाभाववति घटादौ पृथिवीत्वं, उ. भयोस्समावेशः पार्थिवशरीरन्तर्भावेन वर्तत इति पृथिवीत्वादिना साङ्कर्याच्छरीरत्वस्य न जातित्वम् । पृथिवीत्वाभाववति जलीयेन्द्रिये इन्द्रियत्वं, इन्द्रियत्वाभाववति घटादौ पृथिवीत्वं, उभयोस्समावेशः पार्थिवेन्द्रियान्तर्भावेण वर्ततइति पृथिवीत्वादिना साङ्कर्यादिन्द्रियत्व. स्य न जातित्वम् ॥

शुक्लत्वाभाववत्युद्भूतनीले उद्भूतत्वं, उद्भूतत्वाभाववत्यनु द्भूतशुक्ले शुक्लत्वं, उभयोस्समावेश उद्भूतशुक्लान्तर्भावेण वर्तत इति शुक्लत्वादिना साङ्कर्यादुद्भूतत्वस्य न जातित्वं । पृथिवीत्वा. भाववति जलीयपरमाणौ परमाणुत्वं परमाणुत्वाभाववति घटादौ पृ.

थिवीत्वं, उभयोस्समावेशः पार्थिवपरमाणाविति पृथिवीत्वसाङ्कर्येण परमाणुत्वस्य न जातित्वं, एवं द्व्यणुकत्वत्र्यणुकत्वयोरपि पृथिवीत्वसाङ्कर्येण न जातित्वं । शरीरत्वेन्द्रियत्वयोरिव विषयत्वस्यापि पृथिवीत्वादिसाङ्कर्येण न जातित्वं । नीलपृथिवीत्वाभाववति पीतघटे घटत्वं घटत्वाभाववति नीलपटे नीलपृथिवीत्वं, उभयोस्समावेशो नीलघटे वर्तत इति घटत्वादिसांकर्येण नीलपृथिवीत्वस्य न जातित्वम् । घटत्वाभाववति नीलपटे नीलद्रव्यत्वं, नीलद्रव्यत्वाभाववति पीतघटे घटत्वं, उभयोस्समावेशो नीलघटेवर्ततइति घटत्वादिसांकर्येण नीलद्रव्यत्वादीनां न जातित्वम् । एवं नित्यत्वानित्यत्वयोरपि पृथिवीत्वादिसांकर्येण नित्यत्वस्य सामान्यादिवृत्तितया अनित्यत्वस्य प्रागभावसाधारण्येनच न तयोर्जातित्वं । रूपत्वाभाववति जलीयपरमाणुरसादौ नित्यगुणत्वं, नित्यगुणत्वाभाववति घटीयरूपादौ रूपत्वं, उभयोस्समावेशो नित्यरूपे वर्ततइति रूपत्वादिसांकर्येण नित्यगुणत्वस्य न जातित्वं । एवं नित्यद्रव्यत्वस्यापि पृथिवीत्वादिसांकर्येण न जातित्वं । रूपत्वादिसांकर्येणानित्यगुणत्वस्य पृथिवीत्वादिसांकर्येणानित्यद्रव्यत्वस्यच न जातित्वं । शुक्लत्वाभाववति घटनीले घटरूपत्वं घटरूपत्वाभाववति पटशुक्ले शुक्लत्व, उभयोस्समावेशः घटशुक्लइति शुक्लत्वादिना सांकर्येण घटरूपत्वादेर्नजातित्वम् ॥

नच पृथिवीत्वादिसांकर्येण शरीरत्वादीनामिव शरीरत्वसांकर्येण पृथिवीत्वादीनामपि जातित्वं नस्यादिति वाच्यं, जातित्वेनाभिमतसङ्करस्यैव जातिबाधकत्वनियमेन जातित्वेनानभिमतशरीरत्वादिसांकर्यस्य पृथिवीत्वादिजातित्वबाधकत्वाभावात्, नच शरीरत्वादिसांकर्यसत्वेन पृथिवीत्वादीनामपि कथं जातित्वेनाभिमतत्वमिति वाच्यम्, गन्धसमवायकारणतावच्छेदकतया पृथिवीत्वस्य जातित्वसिद्धेः, शरीरत्वस्य तादृशजातित्वव्यवस्थापकाभावात्, नच गु·

णपदशक्यतावच्छेदकतया गुणत्वजातेरिव शरीरपदशक्यतावच्छेद. कतया शरीरत्वस्यापि जातित्वं सिद्ध्यतीति वाच्यम्, शरीरत्वे जातिव्यवहाराभावेन तदसिद्धेः, एतादृशान् जातिबाधकान् "व्य. क्तेरभेदस्तुल्यत्वं सङ्करोथानवस्थितिः, रूपहानिरसम्बन्धो जाति. बाधकसंग्रहः,, इत्यनेन नीलकण्ठविश्वनाथपञ्चाननप्रभृतयः प्राद. र्शयन् ॥

भेदत्वविषयतात्वादिकमखण्डोपाधिरिति सिद्धान्तः गन्धसम. वायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटनिरूपितदंड निष्ठकारणतावदित्यनुमानेन लाघवज्ञानसहकृतेन पथिवीत्वस्य जाति त्वसिद्धिः। एवं जन्यस्नेहसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन जन्यस्नेहसमवायिकारणतावच्छेदकतया ज न्यजलत्वजातिसिद्धिः, तादृशजन्यजलत्वावच्छिन्नसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन जलत्वजातिसिद्धिर्ब. र्बोध्या, सर्वेषु जातित्वसाधकानुमानस्थलेषु लाघवज्ञानस्य सहका. रित्वं ग्राह्यम्। नचानुमानद्वयमन्तरा स्नेहसमवायिकारणतावच्छे दकतैव कुतो न जलत्वजातिसिद्धिरिति वाच्यम्, स्नेहत्वस्यानि. त्यानित्यस्नेहवृत्तितया कार्यतातिप्रसक्तत्वेन कार्यतावच्छेदकत्वाभा. वात्; कार्यताया अन्यूनानतिप्रसक्तधर्मस्यैव कार्यतावच्छेदकत्वात् नच जन्यस्नेहसमवायिकारणतावच्छेदकतैव कुतो न जलत्वजाति. सिद्धिरिति वाच्यम्, जलत्वजातेः परमाण्वन्तर्भावेण जन्यस्नेह. समवायिकारणतातिप्रसक्तत्वेन तत्कारणतावच्छेदकत्वाभावात्, अपिच जन्यस्नेहसमवायिकारणतावच्छेदकधर्मस्य परमाणुष्वङ्गीका. र्यतया नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावइति नियमेन परमा णुष्वपि कदाचिज्जन्यस्नेहोत्पत्तिप्रसङ्गः अतश्च न स्नेहसमवायिका.

रणतावच्छेदकतया जलत्वजातिसिद्धिः, किन्तु निरुक्तानुमानद्वये-नैव तत्सिद्धिर्द्रष्टव्या, स्वरूपयोग्यत्वं च फलजनकतावच्छेदकधर्म-वत्वं ज्ञेयं; घटत्वपटत्वादीनां जातित्वं प्रत्यक्षसिद्धम्, जातिबा-धकाभावे प्रत्यक्षानुमानाभ्यां तत्सिद्धिर्बोध्या ॥

जन्योष्णस्पर्शसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारण-तात्वादित्यनुमानेन जन्यतेजोमात्रसाधारणवैजात्यसिद्धिः, तदव-च्छिन्नसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमा-नेन तेजस्त्वस्य जातित्वे लाघवमिति लाघवज्ञानसहकृतेन तेजस्त्व-स्य जातित्वसिद्धिः । एवं अपाकजजन्यानुष्णशीतस्पर्शनिष्ठवैजा-त्यावच्छिन्नसमवायिकारणतावच्छेदकतया जन्यवायुगतवैजात्यसिद्धिः तदवच्छिन्नसमवायिकारणतयावच्छेदकतया वायुत्वजातेः सिद्धिः, आकाशत्वस्य कालत्वस्य दिक्त्वस्यचैकव्यक्तिमात्रवृत्तित्वात् न जा-तित्वं ॥ ज्ञानसुखादिसमवायिकारणतावच्छेदकतया आत्मत्वजाति-सिद्धिः, नचास्या जातेरीश्वरेप्यङ्गीकारे नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावइति नियमनेश्वरे कदाचित्सुखादेरुत्पत्तिप्रसङ्गइति वा-च्यम्, तादृशनियमस्यानङ्गीकृतत्वात् , ईश्वरेऽदृष्टाभावेन सुखाद्यज-ननात् । अथवा, ईश्वरे सा जातिर्नास्त्येव, जीवात्मन्येव साङ्गी-क्रियते, ईश्वरेप्यात्मत्वव्यवहारस्तु ज्ञानाश्रयत्वविषयकएव, नात्मत्व-जातिविषयकइत्यपि कोचिद्वदन्ति ॥ सुखाद्युपलब्धिकारणतावच्छे-दकतया मनस्त्वजातिर्द्रष्टव्या ॥

घृतजतुप्रभृतिषु पृथिवीत्वस्य हिमखण्डकरकादौ जलत्वस्य सुवर्णादौ तेजस्त्वस्यच व्यवहाराभावेन न पृथिवीत्वजलत्वतेजस्त्व-जातीनां प्रत्यक्षप्रमाणसिद्धत्वम्, वायोर्मनसश्च स्वतः प्रत्यक्ष-त्वासम्भवेन जीवात्मनोऽहंसुखीत्यादिप्रत्यक्षविषयत्वसम्भवेपि परात्म

नः प्रत्यक्षविषयत्वेन न वायुत्वात्मत्वमनस्त्वजातीनां प्रत्यक्षसिद्धत्वम् अतोऽनुमानेनैव तेषां सिद्धिरङ्गीकार्या । नच घृतादिकं परित्यज्य परमाण्वन्तर्भावेण पृथिवीत्वादिजातीनां व्यवहारव्यभिचारः कुतो न प्रदर्शित इति वाच्यम्, तथासति रूपत्वादिजातीनामप्यप्रत्यक्षपरमाणुरूपवृत्तित्वात् प्रत्यक्षासिद्धत्वप्रसङ्गात्, अतो योग्यपदार्थान्तर्भावेणैव प्रत्यक्षत्वव्यवहारव्यभिचारे प्रसक्ते अनुमानप्रमाणेन जातिसिद्धिर्वक्तव्या, अयोग्यान्तर्भावेण व्यवहारव्यभिचारस्यापि जातेः प्रत्यक्षासिद्धनियामकत्वेऽदृष्टचरदूरस्थदण्डादावपि दण्डइत्यादिव्यवहाराभावेन दण्डत्वादिजातीनामपि प्रत्यक्षासिद्धत्वप्रसङ्गः, अयोग्यत्वञ्चात्र प्रत्यक्षकारणसामग्र्यभावप्रयुक्तप्रत्यक्षाविषयत्वं बोध्यम्, अतो दूरस्थदण्डादिषु परमाणुष्वपि प्रत्यक्षकारणोद्भूतमहत्वचक्षुस्संयोगाद्यभावेन तदभावप्रयोज्यप्रत्यक्षाविषयत्वरूपमयोग्यत्वं दूरस्थदण्डादीनां परमाणूनामप्यक्षतम् । यत्र धर्मी स्वतएवाप्रत्यक्षः तद्वृत्तिजातेर्नियतमनुमानेन शब्देन वा सिद्धिर्वक्तव्या, अतो जातिबाधकरहितानां बहुष्वनुगतानां प्रत्यक्षलाघवज्ञानसहकृतानुमानादिसिद्धानामेव धर्माणां जातित्वं वक्तव्यमिति फलितम् ॥

इदं रूपमिदं रूपमित्याकारकप्रात्यक्षिकप्रतीत्यैव रूपत्वजातिसिद्धिः नच सर्वेष्वपि रूपेषु रूपत्वव्यवहाराभावात् कथं प्रत्यक्षतो रूपत्वजातिसिद्धिरिति वाच्यम्, सर्वत्र रूपशब्दोल्लिखिन्याः प्रतीतेरभावेपि वर्णशब्दोल्लिखिन्याः प्रतीतेस्सत्वात्, वर्णरूपपदयोः पर्यायत्वात्, अतो रूपत्वजातिसिद्धिः प्रत्यक्षत एव भवति । नच तथापि इदं रूपमिति प्रतीतिबलात्प्रतीयमानं रूपत्वादिकमधिकरणभेदेन भिन्नमनेकमेव भवतीति न तस्य जातित्वमिति वाच्यं, अनुगतधर्ममन्तराऽनुगतप्रतीतेरसम्भव इति नियमेन इदंरूपमिदंरूपमित्याद्यनुगतप्रतीत्यनुरोधेन सर्वरूपानुगतस्यैकस्य रूपत्वस्यैव जाति-

त्वेन सिद्ध्येस्सम्भवात्, एवमेव रूपत्वव्याप्यानां शुक्लत्वनीलत्वा-दीनामपि जातित्वं प्रत्यक्षप्रमाणतएव सिद्ध्यतीति ज्ञेयं, एवं पृथिवीत्वव्याप्यानां घटत्वपटत्वादीनां जातित्वसिद्धिः प्रत्यक्षतएव ग्राह्या। नच रूपत्वस्य नित्यानित्यरूपवृत्तितया नित्यरूपस्यातीन्द्रियत्वेन तत्र प्रात्यक्षिकरूपत्वव्यवहारस्य दुर्निरूपतया नित्यरूपे कथं रूप-त्वजातिसिद्धिरिति वाच्यं, सर्वेषु योग्येषु तादृशव्यवहारासम्भवे अयोग्ये कुत्रचित्तादृशव्यवहाराभावेपि बाधकाभावात् ॥

एवमेव रसत्वतद्व्याप्यमधुरत्वादीनां गन्धत्वतद्व्याप्यसुरभित्वा-दीनां स्पर्शत्वतद्व्याप्योष्णत्वादीनां जातीनां सिद्धिः प्रत्यक्षतएव ग्रा-ह्या। एवमेव संख्यात्वपरिमाणत्वपृथक्त्वसंयोगत्वविभागत्वपरत्वापर-त्वत्वजातीनां तत्तद्व्याप्यानांच सिद्धिः प्रत्यक्षतएव ग्राह्या। आद्य-पतनासमवायिकारणतावच्छेदकतया गुरुत्वजातिसिद्धिः। इदंद्रव-मिति प्रात्यक्षिकप्रतीत्या द्रवत्वत्वजातिसिद्धिः। पिण्डीभावकारणता-वच्छेदकतया स्नेहत्वजातिसिद्धिः। अयं ध्वन्यात्मकश्शब्दः इत्या-दि प्रात्यक्षिकप्रतीत्या शब्दत्वजातिसिद्धिः। जानामि, स्मरामि, अनुभवामि, साक्षात्करोमि, अनुमिनोमि, उपमिनोमि, शाब्दयां, स-न्दिहे, निश्चिनोमीत्याद्यनुव्यवसायैः ज्ञानत्वस्मृतित्वानुभवत्वप्रत्यक्षत्वा-नुमितित्वोपमितित्वशाब्दत्वसंशयत्वनिश्चयत्वप्रभृतीनां जातीनांसिद्धि-र्भवति। अहंसुखी, अहं दुःखी, अहमिच्छामि, अहं द्वेष्मि, अहं करो-मीत्यादिमानसप्रत्यक्षैस्सुखत्वदुःखत्वेच्छात्वद्वेषत्वप्रयत्नत्वजातीनां सि-द्धिर्भवति। स्वर्गादिसाधनतावच्छेदकतया धर्मत्वजातेः नरकादि-साधनतावच्छेदकतयाऽधर्मत्वजातेः स्मृतिजनकतावच्छेदकतया भाव-नात्वजातेश्च सिद्धिः। वेगत्वजातिः प्रत्यक्षसिद्धा, कटादिनिष्ठ-वैलक्षण्यापादकतावच्छेदकतया स्थितस्थापकसंस्कारत्वजातिसिद्धिः। अथवा, गुणदीधितौ भट्टाचर्योक्तक्रमेण स्थितस्थापकपदशक्यता-

वच्छेदकतया स्थितिस्थापकसंस्कारत्वजातिसिद्धिर्द्रष्टव्या ॥

चलतीत्याकारकप्रात्यक्षिकप्रतीत्या कर्मत्वजातिसिद्धिः । सामान्यादिचतुष्टये यथा जातिर्नास्ति तथोपपादितं प्रागेव । निरुक्तानां जातीनामानुगत्यमतीन्द्रियवृत्तिताप्रसक्तजातित्वभङ्गाभावा श्च रूपत्वजातिस्थलइव बोध्यं । सत्ताजातिस्तु सन्नित्याकारकव्यवहारतो न सिद्ध्यति, सामान्यादावपि तत्प्रतीतेस्सत्त्वात्, नाप्यनुमानं लिङ्गाभावात्, अतःप्रामाणिकव्यवहारएव सत्ताजातिसिद्धौप्रामाणमवधेयं । सत्पदशक्यतावच्छेदकतयात्र सत्ताजातिसिद्धिः क्रियासमवायकारणतावच्छेदकतयामूर्तत्वजातिसिद्धिः ॥

ननु विभुत्वप्रभाघटसंयोगत्वादीनां जातिबाधकसाङ्कर्यादेरभावात्कुतो न जातित्वं नच विभुत्वस्य प्रभाघटसंयोगत्वादेश्च जातित्वग्राहकप्रमाणाभावेन न तेषां जातित्वमिति वाच्यं, विभुपदशक्यतावच्छेदकतया विभुत्वस्य प्रभाघटसंयोगपदशक्यतावच्छेदकतया प्रभाघटसंयोगत्वस्यच गुणपदशक्यतावच्छेदकतया गुणत्वस्यैव जातित्वसिद्धौ बाधकाभावादिति वाच्यं; गुणत्वइव विभुत्वप्रभाघटसंयोगत्वादौ जातित्वव्यवहाराभावात्, निरूपककोटिप्रविष्टानां कार्यत्वकारणत्वप्रभृतीनां अवच्छेदकतानिरूपकाणां केषांचित्सामान्यादिचतुष्टयवृत्तित्वेन केषांचित्सांकर्येणच न जातित्वमित्यवधेयं । इत्थंच यत्र जातिबाधकाभावः जातित्वेन प्रत्यक्षादिप्रमाणासिद्धत्वं नित्यत्वमनेकसमवेतत्वंच निर्विवादं परिदृश्यन्ते तस्यैव जातित्वं वक्तव्यमिति परमार्थः । विशेषसिद्धिस्तु विशेषेषु जात्यभावानिरूपणावसरे परमाणुष्वितरभेदसाधनार्थमिति सम्यगुपपादिता प्रागेव । गुणक्रियाविशिष्टबुद्धिः विशेषणाविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डीपुरुषइति विशिष्टबुद्धिवदित्यनुमानेन संयोगादीनां बाधात्समवायसिद्धिः ॥

येनेन्द्रियेण याव्यक्तिर्गृह्यते तेनेन्द्रियेण तन्निष्ठाजातिस्तदभाववश्च गृह्यत इति न्याये सामान्यतो व्यक्तिपदग्रहणेन द्रव्यगुणकर्मणां सामान्यतोऽभावपदग्रहणेन प्राक्प्रध्वंसात्यन्तान्योन्याभावानां च ग्रहणंच भवति, तथाच घटस्य त्वक्चक्षुर्ग्राह्यत्वेन घटाभावस्यापि तद्ग्राह्यत्वम् । रूपस्य चक्षुर्ग्राह्यत्वेन रूपाभावस्यापि चक्षुर्ग्राह्यत्वम् । रसस्य रसनेन्द्रियग्राह्यत्वेन रसाभावतद्ग्राह्यत्वम् । गन्धस्य घ्रणेन्द्रियग्राह्यत्वेन गन्धाभावस्यापि घ्रणेन्द्रियग्राह्यत्वम् । शब्दस्य श्रोत्रेन्द्रियग्राह्यत्वेन शब्दाभावस्यापि श्रोत्रेन्द्रियग्राह्यत्वम् । सुखदुःखादेर्मनइन्द्रियग्राह्यत्वेन सुखदुःखाभावस्याति मनइन्द्रियग्राह्यत्वम् । संसर्गाभावप्रत्यक्षे प्रतियोगिनोऽयोग्यतापेक्षिता, नातो गुरुत्वाभावस्य प्रत्यक्षं सम्भवति प्रतियोगिनो गुरुत्वस्यायोग्यत्वात्, योग्यत्वंचात्र प्रत्यक्षविषयत्वं ग्राह्यम् । अन्योन्याभावप्रत्यक्षेऽधिकरणस्य योग्यतापेक्षिता, अतस्स्तम्भादौ पिशाचभेदप्रत्यक्षस्य नानुपपत्तिः, प्रतियोगिनः पिशाचस्यायोग्यत्वेऽप्यधिकरणीभूतस्य स्तम्भस्य योग्यत्वात् ॥

द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता सन्निकर्षः, यथा घटाभाववद्भूतलमित्यत्र घटाभावे चक्षुरादीन्द्रियसंयुक्तभूतलविशेषणतायास्सत्वात् । द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणतासन्निकर्षः, यथा घटरूपं घटत्वाभाववदित्यत्र घटरूपनिष्ठघटत्वाभावेच चक्षुरिन्द्रियसंयुक्तघटसमवेतरूपविशेषणतायास्सत्वात् । द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणतासन्निकर्षः, यथारूपत्वंनीलत्वाभाववदित्यत्र चक्षुस्संयुक्तघटसमवेतरूपसमवेतरूपत्वविशेषणताया रूपत्वनिष्ठनीलत्वाभावे सत्वात् । एवं शब्दाभावः श्रोत्रावाच्छन्नविशेषण.

तया गृह्यते । कादौ खत्वाभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया गृह्यते कत्वादौ खत्वाभावः श्रोत्रावच्छिन्नसमवेतसमवेतविशेषणतया गृह्यते । एवं कत्वावच्छिन्नाभावे गत्वाभावः श्रोत्रावच्छिन्नविशेषणविशेषणतया गृह्यते । घटाभावादौ पटाभावः चक्षुस्संयुक्तविशेषणविशेषणतया गृह्यते । स्पर्शाभावे घटाभावः त्वक्संयुक्तविशेषणविशेषणतया गृह्यते । रसाभावे घटाभावः रसनेन्द्रियसंयुक्तविशेषणविशेषणतया गृह्यते । गन्धाभावे घटाभावः घ्राणेन्द्रियसंयुक्तविशेषणविशेषणतया गृह्यते । सुखाद्यभावे दुःखाद्यभावो मनस्संयुक्तविशेषणविशेषणतया गृह्यते । एषा रीतिः द्रव्याश्रितयोग्याभावे इतराभावविशेषणकप्रत्यक्षस्थले ग्राह्या । घटरूपाश्रितघटाभावः पटाभाववानिति प्रत्यक्षे तु इन्द्रियसंयुक्तसमवेतविशेषणविशेषणता सन्निकर्षः । घटरूपत्वनिष्ठघटाभावः घटाभाववानिति प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणविशेषणता सन्निकर्षः । एवं द्रव्याद्याश्रितयोग्याभावे अन्योन्याभावादिविशेषणकप्रत्यक्षस्थलेष्वपि निरुक्तरीत्या सन्निकर्षाः ग्राह्याः ॥

एवं भूतले घटाभाव इत्यत्र इन्द्रियसंयुक्तविशेष्यता सन्निकर्षः, एतन्मते प्रथमान्तार्थस्य घटाभावस्यैव विशेष्यतया अङ्गीकार्यत्वात् । घटरूपे घटाभाव इति प्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेष्यता सन्निकर्षः । घटरूपत्वे घटाभाव इति प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेष्यता सन्निकर्षः । एवं कादौ खत्वाभाव इति प्रत्यक्षे श्रोत्रावच्छिन्नसमवेतविशेष्यता सन्निकर्षः । कत्वावच्छिन्नाभावे गत्वाभाव इति प्रत्यक्षे श्रोत्रावच्छिन्नविशेषणविशेष्यता सन्निकर्षः । एवं स्पर्शाभावे घटाभाव इत्यत्र त्वक्संयुक्तविशेषणविशेष्यता । रसाभावे घटाभाव इत्यत्र रसनेन्द्रियसंयुक्तविशेषणविशेष्य-

ता । गन्धाभावे घटाभाव इत्यत्र घ्राणेन्द्रियसंयुक्तविशेषणविशेष्य-ता । सुखाद्यभावे दुःखाद्यभाव इत्यत्र मनस्संयुक्तविशेषणविशे-ष्यताच सन्निकर्षः । एवं घटाश्रितपटाभावे घटाभाव इति प्रत्य-क्षे इन्द्रियसंयुक्तविशेषणविशेष्यता सन्निकर्षः । घटरूपाश्रितप-टाभावे घटाभाव इति प्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणाविशेष्यता सन्निकर्षः । घटरूपत्वाश्रितपटाभावे घटाभाव इति प्रत्यक्षे इन्द्रि-यसंयुक्तसमवेतसमवेतविशेषणाविशेष्यता सन्निकर्षः। एवमेव द्रव्याद्याश्रि-तयोग्याभावविशेषणकान्योन्याभावादिविशेष्यकप्रत्यक्षस्थलेषु सन्निक-र्षाः प्राह्याः तथाच स्थलभेदेन विशेषणविशेष्यभावं निर्णीय विशे-षणविशेष्यभावसन्निकर्षप्रभेदो निर्धार्य इत्यलं प्रसक्तानुप्रसक्तवि-चारेण ॥

## —एवकारविचारः—

एवकारस्त्रिविधः, विशेष्यसङ्गतः, विशेषणसङ्गतः, क्रियासङ्ग तश्चेति । तत्र विशेष्यसङ्गतस्य तस्य अन्ययोगव्यवच्छेदः; विशे षणसङ्गतस्य तस्य अयोगव्यवच्छेदः, क्रियासङ्गतस्य तस्य अत्यन्ता योगव्यवच्छेदश्चार्थः । अन्ययोगव्यवच्छेदो नाम, अन्यस्मिन् योग-व्यवच्छेदः अन्ययोगव्यवच्छेदः, योगस्सम्बन्धः सच विशेषणस्य बोध्यः व्यवच्छेदोनामाभावः, तथाच अन्यनिष्ठः विशेषणसम्बन्धा-भाव इति फलितम् , प्रकृतविशेष्यादन्यत्रापि विशेषणसम्भावनायां प्रसक्तायां तन्निवृत्तिज्ञापनं यद्यावश्यकं तदा प्रथमो विशेष्यसङ्गते वकारः प्रयोज्यः, विशेष्यसङ्गतत्वंच विशेष्यवाचकपदाव्यवहितोत्त रोच्चारितत्वम , यथा पार्थ एव धनुर्धर इत्यत्र पार्थादन्यत्रापि धनु-र्धरत्वे सम्भाविते तन्निवृत्त्यर्थं प्रयुक्तः अयं एवकारः तथाच पार्थः प्रशस्तधनुर्धरः पार्थान्यो तादृशधनुर्धरत्वाभाववान् इति बोधः

अत्र विज्ञेयः । अयोगव्यवच्छेदो नाम, योगस्याभावः अयोगः तस्य व्यवच्छेद इति व्युत्पत्त्या प्रकृतविशेष्यनिष्ठः विशेषणसम्बन्धाभावाभाव इति फलितम्, प्रकृताविशेष्यतावच्छेदकाश्रये कुत्रचिद्विशेषणाभावे प्रसक्ते तन्निवृत्तिज्ञापनं यद्यदावश्यकं तदा विशेषणसङ्गतैवकारः प्रयोज्यः, यथा शङ्खः पाण्डुर इत्यत्र कस्मिंश्चिच्छङ्खे पाण्डुरत्वाभावे प्रसक्ते तन्निवृत्तिज्ञापनायायमेवकारः, शङ्खत्वव्यापकपाण्डुरत्वाभावाभावप्रतियोगिकसमवायसम्बन्धेन पाण्डुरत्वाभावाभाववान् शङ्ख इति बोधः अत्र भवति, विशेषणसङ्गतत्वंच विशेषणवाचकपदाव्यवहितोत्तरोच्चारितत्वं । अत्यन्तायोगव्यवच्छेदोनाम, अत्यन्तमयोगः, अत्यन्तायोगः, विशेष्यतावच्छेदकावच्छेदेन विशेषणसम्बन्धाभावः तस्य व्यवच्छेद इति व्युत्पत्त्या प्रकृतविशेष्यनिष्ठात्यन्तविशेषणसम्बन्धाभावाभाव इति फलितम्, विशेष्यतावच्छेदकधर्मावच्छेदेन विशेषणाभावे प्रसक्ते तन्निवृत्तिज्ञापनाय तृतीयः क्रियासङ्गतैवकारः प्रयोज्यः, क्रियासङ्गतत्वंच क्रियावाचकपदाव्यवहितोत्तरोच्चरितत्वं, यथा नीलमुत्पलं भवत्येवेत्यत्र उत्पलत्वावच्छेदेन नीलत्वाभावे प्रसक्ते तन्निवृत्तिज्ञापनायायमेवकारः, उत्पलं नीलत्वाभावाभाववदिति सामानाधिकरण्येन बोधः । चरणमेव पङ्कजमित्यत्र एवकारस्याभेदप्रकारकारोपविषयत्वमर्थः, तथाच चरणभेदप्रकारकारोपविशेष्यं पङ्कजमिति बोधः ॥

एवकारसमभिव्याहृतसप्तविभक्तिस्थलेषु शाब्दबोधप्रकारः इत्थं चैत्रएव मैत्रं ताडयतीत्यत्र चैत्रः मैत्रकर्मकताडनकर्ता चैत्रान्यः मैत्रकर्मकताडनकर्तृत्वाभाववानिति बोधः । कामी कान्तामेव कामयते इत्यत्र कान्ताविषयकेच्छावान् कान्तान्यविषयकेच्छाभाववांश्च कामीति बोधः । कुठारेणैव छिनत्ति वृक्षमित्यादौ कुठारकरण-

कवृक्षकर्मकच्छेदनकर्ता कुठारान्यकरणकवृक्षकर्मकच्छेदनकर्तृत्वाभा. ववांश्च अयं पुरुष इति बोधः। ब्राह्मणायैव गां ददातीत्यत्र ब्राह्म· णोद्देश्यकगोकर्मकदानकर्ता ब्राह्मणेतरोद्देश्यकगोकर्मकदानकर्तृत्वाभाव. वांश्चायमिति बोधः । मृत्योरेव बिभेतीत्यत्र मृत्युभिन्नजन्यभयाभा ववान् मृत्युजन्यभयवांश्चायमिति बोधः । चैत्रस्यैवेदं गृहमित्यत्र. चैत्रेतरासम्बन्धि चैत्रसम्बन्धीयं गृहमिति बोधः। द्रव्यएव गुणइ त्यत्र द्रव्येतरनिरूपितवृत्तित्वाभाववान् द्रव्यनिरूपितवृत्तितावांश्च गु. णइति बोधः । एषु सप्तविभक्तिस्थलेषु विद्यमानस्य एवकारस्य अ. न्ययोगव्यवच्छेदएवार्थः, अन्ययोगव्यवच्छेदबोधकैवकारस्थलेषु सर्व. त्रापि भावाभावयो रुभयोरप्यन्वयः अपेक्षितः, अभावमात्रान्वयाङ्गी कारे गगनस्य केनापि सम्बन्धेन कुत्राप्यवृत्तित्वेन घटभिन्ननिरूपि तवृत्तित्वाभावस्यापि गगने अक्षतत्वेन घटएव गगनमित्याकारकप्रा. माणिकव्यवहारापत्तिः, अतो भावान्वयावश्यकता । भावमात्रान्व. याङ्गीकारे द्रव्यवृत्तित्वस्य सत्तायामक्षतत्वेन द्रव्यएव सत्तेति प्रामा णिकव्यवहारापत्तिः अतः अभावान्वयः अवश्यमङ्गीकर्तव्यः । मात्र पदस्य एवकारसमानार्थकत्वं कुत्रचित् परिदृश्यते, यथा मृत्यु मात्रात् बिभेत्ययं पुरुषः, चक्षुर्मात्रेण गृह्यते रूपम् , कामी कान्तमात्रं कामयते इत्यादौ, इत्यलं विस्तरेण ॥

—•एवकारविचारः•—

अन्यत्र क्वचिदुपलभ्योयमेवकारविचारः ॥

एवकारस्त्रिविधः, विशेष्यसङ्गतः, विशेषणसङ्गतः; क्रियास. ङ्गतश्चेति । अत्र विशेष्यसङ्गतैवकारस्य अन्ययोगव्यवच्छेदोऽर्थः, पार्थएव धनुर्धर इत्यादौ विशेषणे धनुर्धरे पार्थान्ययोगव्यवच्छेद, बोधात् । धनुर्धरपदस्योत्कृष्टधनुर्धरे लाक्षणिकत्वात् । तथैव ता.

त्पर्यात्, पर्थान्ययोगस्तादात्म्यम् ॥ विशेषणसङ्गतैवकारस्यायोग व्यवच्छेदोर्थः, शङ्खः पाण्डुरएवेत्यादौ विशेष्ये शङ्खे पाण्डुरत्वायोगव्यवच्छेदबोधात् ॥ क्रियासङ्गतैवकारस्यात्यन्तायोगव्यवच्छेदोर्थः, सम्भवाभिप्रायके नीलं सरोजं भवत्येवेत्यादौ अन्वयतावच्छेदकसरोजत्वसामानाधिकरण्येन नीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदबोधात् इति सम्प्रदायः । तन्नेति दीधितिकृतः । तथाहि, नात्यन्तायोगव्यवच्छेदोऽर्थः, सहि आत्यन्तिकस्यायोगस्य व्यवच्छेदः आत्यन्तिको योगव्यवच्छेदोवा, नाद्यः– आत्यन्तिकत्वस्यान्वयितावच्छेदकव्यापकत्वरूपतया सरोजत्वव्यापकत्वस्य नीलभवनकर्तृत्वायोगस्य अप्रसिद्धत्वेन तद्व्यवच्छेदासम्भवात् । न द्वितीयः, सरोजनिष्ठनीलभवनकर्तृत्वायोगव्यच्छेदस्याप्रसिद्धत्वात् । अथ अयोगे आत्यन्तिकत्वव्यवच्छेदः सरोजनिष्ठनीलभवनकर्तृत्वायोगे सरोजत्वव्यापकत्वस्य द्रव्यत्वादौ प्रसिद्धस्य व्यवच्छेदबोधसम्भवात्, इतिचेन्न, सरोजाविशेषणत्वेनोपस्थितस्य सरोजत्वस्य आत्यन्तिकत्वे अन्वयासम्भवात् । नच सरोजपदं सरोजत्वे लाक्षणिकम्, तथाच नान्याविशेषणत्वेनोपस्थितिरितिवाच्यम्, ईदृशबोधस्य नीलभवनकर्तृत्वायोगव्यवच्छेदः किञ्चित्सरोजनिष्ठइत्यत्रैव तात्पर्यात् । तत्सरोजत्वसामानाधिकरण्येन नीलभवनकर्तृत्वायोगव्यवच्छेदस्वीकारेण वस्तुतस्तु अयोगव्यवच्छेदोऽपि नार्थः । शङ्खः पाण्डुरएवेत्यादौ पाण्डुरत्वादेः पाण्डुरादिविशेषणत्वेनोपस्थितस्य अयोगेऽन्वयासम्भवेन तदयोगबोधासम्भवात् । नच पाण्डुरपदं पाण्डुरत्वादौ लाक्षणिकमिति वाच्यम, शङ्खः पाण्डुरत्वमेवेति प्रयोगापत्तेः । पाण्डुरएवेत्यादिवदत्रापि पाण्डुरत्वायोगव्यवच्छेदबोधसम्भवात् । तस्मादन्ययोगव्यवच्छेदमात्रमेवकारार्थः, शङ्खः पाण्डुरएवेत्यादावपि शङ्खत्वावच्छेदेन पाण्डुरान्ययोगव्यवच्छेदसम्भवात् । नीलं सरोजं भ॰

वत्येवेत्यादावपि तिङा धर्मिणि लक्षणया नीलभवनकर्तर्ययोगव्यव- च्छेदस्य सरोजत्वसामानाधिकरण्येन भाधकाभावः ॥ ज्ञानमर्थं गृ ह्णात्येवेत्यादावपि तिङा धर्मिलक्षणया ज्ञानत्वावच्छेदेनार्थग्राहकान्य- योगव्यवच्छेदबोधः । नच सरोजादौ नीलभवनकर्तृत्वायोगव्यवच्छे दबोधेतु धर्मिलक्षणा व्यर्थेति वाच्यम्, एवपदे शक्तिद्वयकल्पना यां गौरवात् । नचैवार्थत्रैविध्यप्रसिद्धिविरोध इति वाच्यम्, तस्या निरुक्तत्वेनानुपादेयत्वात् । नच अन्ययोगव्यवच्छेदस्य क्वचिद- न्वयितावच्छेदकावच्छेदेन क्वचित्सामानाधिकरण्येनान्वये किं निया- मकमिति वाच्यम्, नियमवाक्यस्य अवच्छेदकावच्छेदेन अन्वय सम्भवपरवाक्यस्य सामानाधिकरण्येन तदन्वये नियामकत्वात् । अत्र एवकारशक्योऽन्ययोगव्यवच्छेदः विलक्षणप्रतियोगितया अन्य- योगविशिष्टव्यवच्छेदरूपो बोध्यः । विलक्षणेत्युपादानात् पार्था- न्ययोगगगनोभयत्वावच्छिन्नव्यवच्छेदस्य मनुष्ये सत्वेऽपि पार्थ एव मनुष्यइत्यादेः न प्रसङ्गः । यद्यप्ययं सामान्यतोऽन्ययोगघटितशक्यः, तथापि तात्पर्यवशात्पार्थएव धनुर्धर इत्यादौ तादात्म्यरूप- योगघटितो व्यवस्थाप्यते । अत्र समवेतत्वादियोगघटितः, तथा हि, पृथिव्यामेव गन्धइत्यादौ पृथिव्यन्यसमवेतत्वाभाववान् पृथि- वीसमवेतत्ववांश्च गन्धइति बोधः, अन्यथा सप्तम्युपस्थापितसमवेत- त्वमनन्वितं स्यात् । पृथिवीपदार्थस्य सप्तम्यर्थैवकारार्थयोरप्यन्वयो व्युत्पत्तिवैचित्र्यात् । एवं चैत्रस्यैवेदं धनं इत्यादौ चैत्रान्यस्व- त्वाभाववत् चैत्रस्वत्ववच्च धनमिति बोधः । एवं मैत्रस्यैवायं भ्रा ता इत्यादौ मैत्रान्यभ्रातृव्यवच्छेदबोधो लक्षणयैव, अन्यभ्रातृत्वादे रन्यसम्बन्धत्वाभावेन तद्व्यवच्छेदस्य एवकाराशक्यत्वादित्याद्यूह्यम् । क्वचिदेकदेशान्वयस्वीकारात् अन्ययोगव्यवच्छेदैकदेशे अन्यत्वे पा- र्थादेरन्वयो निष्कलङ्कः ॥ इत्येवकारविचारस्समाप्तिमगमत् ॥

—•व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविचारः•—

यस्मिन्नधिकरणे येन सम्बन्धेन यः प्रतियोगी वर्तते तस्मिन्नधिकरणे तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकसामान्याभावश्च स्वनियामकसम्बन्धेन देशकालरूपावच्छेदकभेदेन यदि विद्येत तौ प्रतियोग्यभावौ अव्याप्यवृत्ती इति ज्ञेयौ । अपितु कालरूपावच्छेदकभेदेन निरुक्तरीत्या समानाधिकरणौ प्रतियोगितदभावौ कालिकाव्याप्यवृत्ती, देशरूपावच्छेदकभेदेन समानाधिकरणौ प्रतियोगितदभावौ दैशिकाव्याप्यवृत्तीच भवत इति ज्ञेयम्, यथा "उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च तिष्ठ,,तीति न्यायगम्यसामानाधिकरण्यविशिष्टे रूपतदभावौ अन्यौच गुणत्वव्याप्यधर्मावच्छिन्नतदभावौ क्रियातदभावौ अन्यावेवंविधौच कालिकाव्याप्यवृत्ती भवतः । अग्रमूलावच्छिन्नौ वृक्षे समानाधिकरणौ कपिसंयोगतदभावौ अन्यावेवंविधौच दैशिकाव्याप्यवृत्ती भवतः । यौच प्रतियोगितदभावौ देशरूपावच्छेदकभेदेन कालरूपावच्छेदकभेदेन च समानाधिकरणौ तौ दैशिकाव्याप्यवृत्ती कालिकाव्याप्यवृत्तीच भवतः । यथा वह्नितदभावौ "पर्वतो नितम्बे हुताशनी नशिखरे;, इति; प्रतीत्या दैशिकाव्याप्यवृत्ती "तदानीं पर्वतो हुताशनी नेदानीमित्यादिप्रतीत्या कालिकाव्याप्यवृत्तीच भवतः । एवं इह पर्वते नितम्बे हुताशनो न शिखरे इत्यादि प्रतीत्यनुरोधेन वह्निनिष्ठौ नितम्बावच्छिन्नपर्वतत्वसामानाधिकरण्याशिखरावच्छिन्नपर्वतत्वसामानाधिकरण्याभावौच अव्याप्यवृत्ती ज्ञेयौ । इह पर्वते नितम्बे हुताशनो न शिखरे, तदानीं पर्वते हुताशनो नेदानीम्-इत्यादिप्रतीतिभिः देशनिरूपितवृत्तितायां देशकालावेव अवच्छेदकतया भासेते । देशे वृत्तौ कालस्येव काले वृत्तौ देशस्याप्यवच्छेदकत्वानुभवात् "इदा.

नीं चत्वरे गौर्नास्ति,, इत्यादिप्रतीत्यनुरोधेन गवाभावे एतत्कालावच्छेदेन चत्वारवृत्तित्वस्येव चत्वारावच्छेदेन एतत्कालवृत्तित्वस्यापि भानस्याङ्गीकृतत्वेन कालनिरूपितवृत्तितावच्छेदकत्वमपि देशे अङ्गीक्रियत इति ज्ञेयम । स्थितेचैवं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपेऽव्याप्यवृत्तिसामान्यलक्षणे स्वनिष्ठाधेयताऽभावीयप्रतियोगिताच एकसम्बन्धावच्छिन्नत्वेन ग्राह्ये, अन्यथा पटत्वादेरप्यव्याप्यवृत्तिताप्रसङ्गः, पटत्वादेः समवायेन स्वाधिकरणवृत्तिसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगित्वात् । अपिच स्वनिष्ठाधेयता अभावनिष्ठाधेयताच सजातीयदेशकालान्यतरावच्छिन्नत्वेन ग्राह्ये, अन्यथा रूपादेरपि दैशिकाव्याप्यवृत्तिताप्रसङ्गः, रूपादेः स्वाधिकरणे घटादौ उत्पत्तिकालावच्छेदेन विद्यमानस्य रूपाद्यभावस्य प्रतियोगित्वात् । अव्याप्यवृत्तिप्रभेदस्य निर्णेतुमशक्यत्वाच्च । किञ्च स्वाधिकरणनिरूपिता वृत्तिता स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वेन ग्राह्या, अन्यथा घटत्वादेरप्यव्याप्यवृत्तिताप्रसङ्गः, घटत्वादेः स्वाधिकरणे घटादौ कालिकसम्बन्धेन विद्यमानस्य स्वाभावस्य प्रतियोगित्वात् । तत्र स्वरूपसम्बन्धावच्छिन्नत्वनिवेशेऽभावरूपकपिसंयोगाभावाभावादेरसङ्ग्राह्यत्वप्रसङ्गः स्वरूपसमवायान्यतरसम्बन्धावच्छिन्नत्वप्रवेशने घटाभावाभावादेरसङ्ग्रहप्रसङ्गः । स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वञ्च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धावच्छिन्नत्वरूपं ग्राह्यम् । अत्रच प्रतिबन्धकनिश्चयः अव्याप्यवृत्तित्वज्ञानानास्कन्दितः । स्वरूपसमवायादिसम्बन्धेन कपिसंयोगाभावतदभावादिप्रकारको निश्चयो ग्राह्यः, तथाच स्वरूपसमवायादिस्तादृशः सम्बन्धो भवतीति न दोषावकाशः । अत्र

लक्षणानुगमस्याभावनिराकरणाय अव्याप्यवृत्तिसामान्यलक्षणस्यानुगमः क्रियते। यथा, वस्तुविशिष्टत्वमव्याप्यवृत्तित्वम् (वस्तुपदं प्रतियोगि-परं) वस्तुवैशिष्ट्यञ्च स्वतादात्म्यस्वनिष्ठाधेयताविशिष्टप्रतियोगित्वो-भयसम्बन्धेन (प्रतियोगितात्र स्वसमानाधिकरणाभावीया ग्राह्या) प्र-तियोगितायामाधेयतावैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वा-वच्छेदकधर्मावच्छिन्नत्वस्वविशिष्टाधेयतावदभावनिरूपितत्वरूपसम्बन्ध-त्रयेण [एवंच व्यधिकरणसम्बन्धावच्छिन्नाभावमादाय घटत्वपटत्वो-भयाभावादिकं च आदाय घटत्वादौ नेति प्रसङ्ग] स्ववै-शिष्ट्यंचाधेयतायां (अत्र स्वपदं प्रतियोगिनिष्ठाधेयतापरं) आधेयतापदं च अभावनिष्ठाधेयतापरम्) स्वावच्छेदकदेश-कालान्यतरसजातीयदेशकालान्यतरावच्छिन्नत्व (स्वावच्छेदकधर्मसजा-तीयधर्मावच्छिन्नत्ववृत्तिमान् धर्मो ग्राह्यः) स्वावच्छेदकधर्मावच्छि-न्नाधेयतानिरूपिताधिकरणतावन्निरूपितत्वसम्बन्धद्वयेन, साजात्यञ्च देशत्वकालत्वान्यतरधर्मरूपेण ग्राह्यम्, (अतः उत्पत्तिकालावच्छिन्नरूपाद्यभावमादाय रूपादेर्न दैशिकाव्याप्यवृत्तिताप्रसङ्गः) पूर्वो-क्तसम्बन्धद्वयेन वस्तुविशिष्टान्यत्वं व्याप्यवृत्तित्वम् ॥

विद्यार्थिनां बोधसौकर्यार्थं प्रायः प्रातिस्विकरूपेण द्रव्यादि-सप्तपदार्थानादाय दैशिकं कालिकञ्च अव्याप्यवृत्तित्वं यथामति निरूप्यते— दैशिकाव्याप्यवृत्तित्वंच स्वनिष्ठदेशावच्छिन्नाधेयतानि-रूपिताधिकरणतावन्निरूपितदेशावच्छिन्नवृत्तितावदभावप्रतियोगित्वम्। कालिकाव्याप्यवृत्तित्वंच स्वनिष्ठकालावच्छिन्नाधेयतानिरूपिताधिकर-णतावन्निरूपितकालावच्छिन्नवृत्तितावदभावप्रतियोगित्वम्। (उभयत्र स्वपदं प्रतियोगिपरम्) पृथिव्यप्तेजोवायूनां नित्यानामनित्यानां च संयोगसम्बन्धेन दैशिकाव्याप्यवृत्तित्वं कालिकाव्याप्यवृत्तित्वंच प्रा-प्तम्, तत्र "पर्वतो नितम्बे हुताशनी न शिखरे, "तदानीं पर्वतो

हुताशनी नेदानी,,मित्याद्याः प्रतीतयो नियामकाः। तेषु समवाये नाऽव्याप्यवृत्तित्वन्तु अवयविनां घटादीनामेव तच्च कालिकमेव अव. यवेषु स्वस्थितिकालावच्छेदेन विद्यमानानां तेषां स्वध्वंसकालाव. च्छेदेन स्वाभावसमानाधिकरणत्वात्। आकाशकालदिगात्मनां नि. त्यत्वेन विभुत्वेन च नाऽव्याप्यवृत्तितायाः प्रसक्तिः। मनस्तु पुरी. तति अवच्छेदककालभेदेन शरीरे इन्द्रियादिदेशरूपावच्छेदकभेदे. न च स्वाभावसमानाधिकरणत्वेन द्विविधेन तेन समन्वितं भवति अवयवि (जन्य) गतानां रूपादिस्नेहान्तानां गुणानां "उत्पन्नं द्र. व्यं क्षणमगुणं निष्क्रियंच तिष्ठती,,ति न्यायानुसारेण कालरूपाव. च्छेदकभेदेन विद्यमानानां स्वाभावानां समानाधिकरणत्वेन कालि. काव्याप्यवृत्तित्वमेव, देशभेदेन एकत्र रूपत्वादिसामान्यधर्मावच्छि. न्नानां तेषां स्वाभावसामानाधिकरण्यप्रसक्तेरभावेन न दैशिकं तत्। सर्वस्यापि पाकजरूपादिचतुष्टयस्य कालिकाऽव्याप्यवृत्तित्वमेव। रूपादौ व्यप्यवृत्तिताव्यवहारस्तु दैशिकाऽव्याप्यवृत्तिताविरहमादाये. व। नचैवं नीलपीतादिरूपाणां चित्रपटाद्यन्तर्भावेण दैशिका. व्याप्यवृत्तित्वमपि स्यादिति वाच्यम्, व्याप्यवृत्तिजातीयध. र्माणामव्याप्यवृत्तित्वे प्रमाणाभाव इति नियमानुसारेण व्याप्यवृत्ति रूपादिसजातीयतया तेषां अव्याप्यवृत्तित्वस्य (दैशिकस्य) स्वीक. र्तुमशक्यत्वात्। अपेक्षाबुद्धिजन्या द्वित्वादिसङ्ख्या कालिकाऽव्याप्य- वृत्तिः। संयोगविभागयोस्संयोगत्वविभागत्वधर्मावच्छिन्नयोर्नदैशि. काव्याप्यवृत्तित्वम्, परन्तु कपिसंयोगत्वादिविशेषधर्मावच्छिन्नस्यैव दैशिकं तत्। नचैवं नीलपीतादिरूपादेरिव कपिसंयोगादेरपि व्या प्यवृत्ती संयोगत्वावच्छिन्नसजातीयतया न दैशिकाऽव्याप्यवृत्तित्वस्वी करणमुचितमिति वाच्यम्, अग्रे वृक्षः कपिसंयोगी मूले न इत्यादि- निर्विवादप्रतीतीनामेव नियामकत्वात्, नीलपीतादिस्थले तादृशनि.

विवादप्रतीतिविरहेण तेषां दैशिकाऽव्याप्यवृत्तित्वस्य स्वीकर्तुमशक्यत्वात् । अतः कपिसंयोगादीनां दैशिकाऽव्याप्यवृत्तित्वस्यैव "तदानीं वृक्षे कपिसंयोगो नेदानीं,,मित्यादिप्रतीत्या· कालिकंच तन्निर्विवादम् । नवीनास्तु संयोगत्वादिसामान्यधर्मावच्छिन्नस्यापि अनित्यतां निमित्तीकृत्य दैशिकाऽव्याप्यवृत्तित्वमप्यङ्गीकुर्वते । प्राचीनास्तु यस्य कस्यापि संयोगस्य सर्वदा विद्यमानतया, संयोगत्वावच्छिन्नाभावादेस्संयोगाधिकरणे दुर्निरूपतया संयोगत्वाद्यवच्छिन्नत्व. दैशिकाऽव्याप्यवृत्तितां नाङ्गीकुर्वते । शब्दस्यतु द्विविधं तत्सम्भवति, शब्दतदभावयोः भेर्यादिदेशतदन्यदेशाद्यवच्छेदकभेदेनेव पूर्वोत्तरकालाद्यवच्छेदकभेदेनापि सामानाधिकरण्यसम्भवात । बुद्धीच्छाद्वेष. प्रयत्नधर्माधर्मसंस्काराणां द्विविधं तत्सम्भवति, तत्तदभावयोः सुषुप्त्यादिकालतदन्यकालावच्छेदेनेव शरीरतदन्यदेशाद्यवच्छेदकभेदेनच आत्मनि समानाधिकरणत्वात् । सुखदुःखयोरप्यव्याप्यवृत्तित्वाद्वितीयमपि सम्भवति, जाग्रद्दशायामपि पूर्वोत्तरकालावच्छेदेन करचरणाद्यवच्छेदकभेदेन च आत्मनि समानाधिकरणत्वत् । एवमन्येषां गुणत्वव्याप्यव्याप्यधर्मावच्छिन्नानां व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वे तत्प्रभेदौच ऊह्यौ । कर्मणस्सर्वस्याप्यनित्यत्वतया दैशिकाव्याप्यवृत्ति. त्वे निर्विवादः, शाखामूलाद्यवच्छेदकभेदेन वृक्षादौ तत्तदभावोपलब्धेः दैशिकंच तत्सम्भवति । घटादिगतकर्मणस्तु न दैशिकाऽव्या. प्यवृत्तित्वं, तत्र तत्तदभावयोर्देशभेदेन निरूपयितुमशक्यत्वात् । अतो नैका रीतिर्दृश्यतेऽव्याप्यवृत्तित्वतत्प्रभेदनिर्धारणे किन्तु वस्तु. स्वभावमनुरुध्य अनुभवबलेन तन्निर्धारणीयम् । सामान्यविशेषसमवायेषु अव्याप्यवृत्तित्वशङ्कैव नास्ति । भेदेपि न तत्प्रसक्तिः, भेदस्य व्याप्यवृत्तित्वनियमात् । घटादिध्वंसघटादिप्रागभावयोः स्वप्रतियोगिसमवायिदेशे कालभेदेन तत्तदभावसमानाधिकरणतया का.

लिकं तत्सम्भवति । अत्यन्ताभावस्य तु स्थलभेदेन कालिकं दैशिकञ्चाव्याप्यवृत्तित्वं सम्भवतीति ज्ञेयम, यथा कपिसंयोगाभावादेः द्विविधं तत्सम्भवति क्वचन एकमेव, यथा रूपाभावादौ अव्याप्यवृत्त्यधिकरणतातु नाव्याप्यवृत्तिः । ज्ञानविषयत्वतदभावौ ज्ञानतद्विरहकालावच्छेदेन परस्परसमानाधिकरणतया कालिकाव्याप्यवृत्ती एव भवतः। कार्यत्वकारणत्वप्रतियोगित्वादिकं व्याप्यवृत्त्येव । एवमन्यत्राप्यूह्यम् ॥

## —•ज्ञानप्रभेदनिरूपणम्•—

विद्यार्थिनां बोधसौलभ्याय एकत्रैव बहूनां ज्ञानानां स्वरूपाणि प्रदर्श्यन्ते ॥— विशिष्टज्ञानम्, विशिष्टवैशिष्ट्यावगाहिज्ञानं, विशेष्यविशेषणमिति रीत्या अवगाहिज्ञानं, समूहालम्बनज्ञानं, समुच्चयज्ञानं एकत्र द्वयमिति रीत्या पदार्थावगाहिज्ञानं, संशयः, [विकल्पज्ञानं] सम्भावना, उपेक्षात्मकनिश्चयः, उपेक्षानात्मकनिश्चयः, अपेक्षाबुद्धिः, प्रत्यभिज्ञा, अनुभवः, निश्चयः सप्रांशे प्रमात्मकज्ञानं, इत्यादयो ज्ञानप्रभेदाः ॥

क्रमेणोदाहरणानि प्रदर्श्यन्ते— किञ्चित्प्रकारकं ज्ञानं विशिष्टज्ञानं, यथा घटत्वप्रकारकं (घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठाविशेष्यताशालि) अयं घट इति ज्ञानं तत्, विशिष्टबुद्धिंप्रति विशेषणज्ञानं कारणम्, तथाच घटत्वविषयकनिर्विकल्पकं ज्ञानं अयं घट इति विशिष्टबुद्धौ कारणमिति ज्ञेयम्, किञ्चित्प्रकारविशिष्टवस्तुप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यावगाहिज्ञानं भवति । यथाघटत्वरूपप्रकारविशिष्टघटप्रकारकं घटवद्भूतलमित्यादि ज्ञानं तत्; घटत्वनिष्ठप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता तदवच्छिन्ना या घटनिष्ठा प्रकारता तन्निरूपिता या भूतलनिष्ठा विशेष्यता तान्नि.

रूपकं इदं विशिष्टवैशिष्ट्यावगाहिज्ञानं भवति । अन्तराभासमानपदार्थनिष्ठप्रकारताविशेष्यतयोः जगदीशेन अभेदस्याङ्गीकृतत्वेऽपि गदाधरेण अभेदनिरासपुरस्सरं तयोरवच्छेद्यावच्छेदकभावस्य सिद्धान्तितत्वेन अत्र घटनिष्ठविशेष्यताप्रकारतयोरवच्छेद्यावच्छेदकभावएव, नाभेदः– तयोरभेदस्वीकारे रूपवद्दण्डवत्पुरुषवान् देशः इति ज्ञानंप्रति पुरुषाभाववान् दण्ड इति ज्ञानस्य प्रतिबन्धकत्वापत्तिः, इत्यभेदमतं गदाधरेण दूषितं सङ्क्षनुमितिग्रन्थे, प्रतिबध्यज्ञानस्य पुरुषनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यताशालिज्ञानत्वरूपतत्प्रतिबध्यतावच्छेदकरूपाक्रान्तत्वात्, पुरुषनिष्ठप्रकारताविशेष्यतयोः दण्डनिष्ठप्रकारताविशेष्यतयोश्च ऐक्यात् । विशिष्टवैशिष्ट्यावगाहबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणं भवति विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकम्, अत्र तादृशं ज्ञानं घटत्वप्रकारकं घटविशेष्यकं अयं घट इति ज्ञानं भवति । यस्मिन्ज्ञाने यद्यद्विशेष्यं भवति तस्मिन्तस्मिन् प्रत्येकं एकैकं विशेषणमेव भासते, न क्वापि विशेष्ये विशिष्टं प्रकारीभवति तद्ज्ञानं विशेष्ये विशेषणमितिरीत्यापदार्थावगाहिज्ञानमित्युच्यते, तत्र प्रत्येकविशेषणज्ञानान्येव कारणीभवन्ति, नतु विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणं भवति, तत्स्वरूपन्तु घटवद्भूतलवान्देश इति अत्र घटो भूतले भूतलं देश एव प्रकारीभवति, नतु घटविशिष्टभूतलस्य देशे प्रकारत्वं संभवति, तथाच तद्ज्ञानं घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताशालिभूतलनिष्ठप्रकारतानिरूपितदेशनिष्ठाविशेष्यताशालिच भवति, नतु घटनिष्ठप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तदवच्छेद्यभूतलनिष्ठप्रकारतानिरूपिता या देशनिष्ठाविशेष्यता तच्छालि भवतीति ज्ञेयम्, नतु विशिष्टवैशिष्ट्यावगाहिज्ञानइव तद्ज्ञानीयानां सर्वासां प्रकारतानां तत्समानाधिकर

णविशेष्यताभिन्नं अवच्छेद्यावच्छेदकभावो वर्तते, तथाच विशेष्ये विशेषणमिति ज्ञाने अन्तराभासमानपदार्थनिष्ठविशेष्यताप्रकारत्वयो रवच्छेद्यावच्छेदकभावो नास्तीति विशिष्टवैशिष्ट्यावगाहिज्ञानतो भेदमाहुः केचित्, संसर्गांशे विशिष्टप्रतियोगिकत्वभानाभानाभ्यां भेदः अनयोरित्यन्ये (विशेष्ये विशेषणमिति ज्ञाने संसर्गांशे विशिष्टं प्रतियोगिकत्वं न भासत इति ज्ञेयम्) नानामुख्यविशेष्यकज्ञानं समूहालम्बनज्ञानमित्युच्यते, यथा पर्वतोवह्निमान्ह्रदो जलवान् इतिज्ञानं इदन्तु वह्निनिष्ठप्रकारतानिरूपितपर्वतनिष्ठमुख्यविशेष्यताशालि जलनिष्ठप्रकारतानिरूपितह्रदनिष्ठमुख्यविशेष्यताशालिच भवति एकस्मिन् वस्तुनि उभयप्रकारकं ज्ञानं समुच्चयात्मकं ज्ञानमित्युच्यते, अत्र विशेष्यस्यैकत्वेपि तस्मिन् विशेष्यताद्वयमङ्गीक्रियते, तथाच पर्वतो वह्निमान् धूमवांश्चेति समुच्चयज्ञानं वह्निनिष्ठप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताकं धूमनिष्ठप्रकारतानिरूपितपर्वतनिष्ठ (पूर्वविशेष्यताभिन्न) विशेष्यताकञ्च भवति, समूहालम्बने विशेष्यताद्वयं व्यधिकरणं, अत्रतु समानाधिकरणं तदिति समूहालम्बनतो भेदः, संशयेतु एकैव मुख्यविशेष्यता, अत्र तद्द्वयं संशये भावाभावयोः प्रकारत्वं, अत्रत्वन्येषामपि प्रकारत्वं सम्भवतीति संशयादस्य महान् भेदो वर्तते। पर्वतो ह्रदश्च वाच्यत्ववानिति ज्ञानमपि समुच्चयएवान्तर्भवति, अत्रापि पूर्ववत्प्रकारताद्वयं विशेष्यताद्वयञ्च वर्तते। पूर्वसमुच्चये एकस्मिन् द्वयोः प्रकारत्वं, अत्रतु द्वयोरेकस्य प्रकारत्वमितीयानेव भेदः। नच तर्हि पर्वतो ह्रदश्च वाच्यत्ववानिति समुच्चयज्ञानस्यापि नानामुख्यविशेष्यकत्वात्समूहालम्बनत्वापत्तिरितिवाच्यम्, नानामुख्यविशेष्यकत्वस्यैव नानाप्रकारकत्वस्यापि समूहालम्बनलक्षणत्वेन विवक्षणीयत्वात्, नच तथापि पर्वतो ह्रदश्च घटवद्भूतलसमानकालीनवाच्यत्ववान् इति समुच्चयेऽतिप्रसङ्गो द्वयोः

रः, प्रकारांशमादाय नानाप्रकारकत्वस्यापि सत्त्वादिति वाच्यम, विभिन्नधर्मावच्छिन्ननानामुख्यविशेष्यतानिरूपित विभिन्नधर्मावच्छिन्नं नानामुख्यप्रकारताकत्वस्य तल्लक्षणत्वेन विवक्षणीयत्वात्, विशेष्यतायां प्रकारतायांच विभिन्नधर्मावच्छिन्नत्वनिवेशात् पूर्वसमुच्चयद्वयेपि नातिव्याप्तिः। अस्यानुगमस्तु मुख्यविशेष्यताविशिष्टत्वं समूयालम्बनस्य लक्षणम्, वैशिष्ट्यञ्च स्व (स्वावच्छेदकधर्मावच्छिन्न-विशेष्यता) निरूपितप्रकारताकत्वस्वानवच्छेदकधर्मावच्छिन्नमुख्यविशेष्यतानिरूपितस्वनिरूपितप्रकारतानवच्छेदकधर्मावच्छिन्न प्रकारकत्वोभयसम्बन्धेनेति। अथवा पर्वतो ह्रदश्च वाच्यत्वानिति ज्ञाने एकप्रकारतानिरूपितविशेष्यताद्वयं स्वीकृत्य समुच्चयज्ञानत्वमस्वीकृत्य विलक्षणज्ञानरूपत्वाङ्गीकारेऽपि न क्षतिः॥

अथ एकत्र द्वयमिति रीत्या पदार्थावगाहिज्ञानं विचार्यते। इदं ज्ञानं समुच्चयज्ञानाद्भिद्यतेवा नवेति विचारणीयम्, एकविशेष्यतानिरूपितप्रकारताद्वयमत्र स्वीकृतंचेत् विशेष्यताद्वयनिरूपकात् समुच्चयज्ञानाद्भिद्यत इदमित्यपि वक्तुं शक्यते, नच तर्हि संशयाद्भेदो दुर्निरूप इति वाच्यम्, संशयस्य भावाभावप्रकारकत्वेन अस्यच अन्यविषयकत्वेनच स्वीकारे अनुपपत्तिविरहात्। तथाच घटपटवद्भूतलमिति ज्ञानं एकत्र द्वयमिति रीत्या पदार्थावगाहिज्ञानमिति विज्ञेयम्। एकस्मिन् विरुद्धभावाभावप्रकारकज्ञानंहि संशयः, विरुद्धत्वविशेषणात् वृक्षः कपिसंयोगी कापिसंयोगाभाववांश्चेति ज्ञाने तल्लक्षणस्य नातिव्याप्तिः। नचैवमपि वह्निमद्ध्रदो वह्न्यभाववानिति नियताहार्ये अतिव्याप्तिर्दुर्वारा, तस्य वह्निवह्न्यभावप्रकारकत्वादिति वाच्यम्, तल्लक्षणे प्रकारताद्वये धर्मिताव्च्छेदकता [समानाधिकरणत्वस्य] नात्मकत्वस्य निवेशनीयत्वात्।

संशयस्वरूपन्तु अयं स्थाणुर्वा नवा पर्वतो वह्निमान्नवेत्यादि। संशयसामग्रीतु साधारणधर्मवद्धर्मिज्ञानं असाधारणधर्मधर्मिज्ञानं विप्रतिपत्तिवाक्यजन्यकोटिद्वयोपस्थितिश्च पर्वतो वह्निमान्नवेति संशयस्थले वह्निसहचरितवह्न्यभावसहचरितजलवान् पर्वतः इति साधारणधर्मवद्धर्मिज्ञानं वह्निविरुद्धवह्न्यभावविरुद्धधर्मवान् पर्वत इत्यसाधारणधर्मवद्धर्मिज्ञानं पर्वतो वह्निमान् पर्वतो वह्न्यभाववानिति विप्रतिपत्तिवाक्यजन्यवह्निवह्न्यभावरूपकोटिद्वयोपस्थितिश्च सामग्रीभवति, एवमन्यत्राप्यूह्यम्। विरुद्धार्थबोधकवाक्यद्वयं विप्रतिपत्तिरिति ग्राह्यम्। एकैकनिर्वर्त्यकार्यनिर्वाहकतुल्यबलपदार्थद्वयविषयकयथाश्रुते विकल्पात्मकं ज्ञानमिति ज्ञेयम्। तथा च एकप्रकारतानिरूपितविशेष्यताद्वयशालिज्ञानं तदिति ज्ञेयम्। पर्वतो ह्रदश्च वाच्यत्ववानिति समुच्चये प्रकारताद्वयस्वीकरणात्ततो भेदस्स्पष्ट एव; रामो लक्ष्मणो वा हनिष्यति शत्रुमिति ज्ञानं विकल्प इति ज्ञेयम्। पर्वतो ह्रदश्च वाच्यत्ववानिति ज्ञाने (वस्तुतस्तु नैका प्रकारताऽङ्गीकार्या) प्येकैव प्रकारता यद्यभ्युपेयते तर्हि विकल्पे विशेष्ययोरन्योन्यतौल्यभानमपि तात्पर्यवशादङ्गीकृत्य ज्ञानयो रनयोर्भेदोऽवगन्तव्यः। यद्यपदार्थस्य शाब्दबोधे भानाङ्गीकारेण विकल्पे तौल्यभानं न सम्भवतीत्युच्येत तर्हि विकल्पज्ञानानन्तरं विशेष्ययोस्तौल्यविषयकं मानसं ज्ञानमुत्पद्यत इति स्वीकारेण द्वयोर्भेदो ग्राह्यः। विकल्पो निश्चयरूपएव। विकल्पभिन्नज्ञानस्थले न तौल्यभानमिति तयोस्समानविषयकत्वेपि नातिप्रसङ्गावकाशः। उत्कटैकतरकोटिकस्संशयएव सम्भावनेत्युच्यते, साच दूरे वर्तमानं पुरुषं पश्यत उत्पन्ना (देवदत्तइवाभातीति ज्ञानं) अयं देवदत्तः स्यादिति ज्ञानं। (देवदत्तःस्यादित्यादिशब्दाः संभावनाया अभिलापकाः नतु वाचका इति ज्ञेयम)

परन्तु संशये कोटिद्वयस्यसमानत्वम । सम्भावनायान्तु एकस्याः कोटेरुत्कटत्वमितीयानेव भेदः । उत्कटत्वंच विषयताविशेषः, बहुषु पदार्थेषु दृष्टेष्वन्यथाऽनुभूतेषु वा तेषु कषांचिदेव पदार्थानां स्मरणं जायते, नानुभूतानां सर्वेषां, तत्स्मरणानुत्पत्तितदुत्पत्त्योर्निर्वाहाय उपेक्षात्मकतदनात्मकनिश्चयद्वयमङ्गीकार्यम् , अतः भावनायां स्मरणेच साक्षात्परम्परया वा उपेक्षानात्मकनिश्चयः कारणं भवतीति वक्तव्यम्, यत्रच स्मरणं नजायते तत्र उपेक्षानात्मकनिश्चयरूपकारणविरहेणैवेति निर्णयः कार्यः, द्वित्वत्रित्वादिकारणीभूता अनेकेषु पदार्थेष्वयमेकः अयमेकइत्याद्यपेक्षाबुद्धिः जायते । इयन्तु क्षणत्रयं तिष्ठति । अन्या बुद्धयः क्षणद्वयमेव तिष्ठन्ति । शब्दबुद्ध्योः [शब्दबुद्धिकर्मणां द्वित्रिक्षणावस्थायित्वम् ] क्षणद्वयमात्रावस्थायित्वाङ्गीकारात्, भावनातु स्मरणपर्यन्तं तिष्ठति (प्रथमस्मृतिमुत्पाद्य समनन्तरस्मृतिप्रयोजिकां भावनामन्यामुत्पाद्य स्वयं नश्यतीत्येके, चरमस्मृतिपर्यन्तमेकैव प्रथमोत्पन्ना भावना तिष्ठतीत्यपरे] इच्छातु विषयसिद्ध्यनन्तरं नश्यति, अन्येषां गुणानां अनुभवानुसारेण कालव्यवस्था कार्या ॥

सोयं देवदत्त इत्यादिज्ञानं प्रत्यभिज्ञात्मकं ज्ञानम् , अत्र तत्तांशभाने संस्कारः इदंत्वांशभानेसन्निकर्षश्चकारणं भवति, इदमनुभवएवान्तर्भवति, न स्मृतौ, स्मृतेस्संस्कारमात्रजन्यत्वात , प्रत्यभिज्ञायाश्च अतथात्वात् अथ सोयं देवदत्त इत्यत्रान्वयबोधप्रकारः प्रदर्श्यते, तत्पदेन तद्देशतत्कालवृत्तित्वोपलक्षितः इदंपदेन एतद्देशैतत्कालवृत्तित्वविशिष्टश्चोपस्थाप्यते, अन्यथा तदिदं पदयो रुभयोरपि तत्तद्देशकालादिवृत्तित्वविशिष्टार्थकत्वस्वीकारे विशेषणभेदाद्विशिष्टयोर्भेदस्याङ्गीकर्तव्यतया तादृशविशिष्टयोरभेदो बाधितः स्यादिति वाक्य

स्यास्य प्रामाण्यं दुर्निरूपं स्यात्, अपितु प्रत्यभिज्ञाकाले देवद. त्ते इदं पदार्थभेदस्याबाधितत्वेन तद्देशतत्कालवृत्तित्ववैशिष्ट्यस्यैव बाधितत्वेन तत्पदस्यैव तद्देशकालवृत्तित्वोपलक्षितार्थकत्वस्वीकारस्समुचित:, तथाच एतद्देशैतत्कालवृत्तित्वविशिष्टो देवदत्त: तद्देशतत्का. लवृत्तित्वोपलक्षितदेवदत्ताभिन्नइति बोधस्सम्भवतीति वक्तव्यम् ।

ननु तत्त्वमसीत्यादौ अद्वैतिनां मत इव जहदजहल्लक्षणया विशेषणपरित्यागेन अबाधिततादिदंपदलक्ष्यार्थाभेदबोधस्यसम्भवे ; त. च्छब्दमात्रस्य तादृशवृत्तित्वोपलक्षितार्थकत्वस्वीकार: किमर्थ इतिचेन्न, नैयायिकै: जहदजहल्लक्षणाया अनङ्गीकृतत्वात्, अद्वैतिमतेऽङ्गीकृ. ताया जहदजहल्लक्षणाया: शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्र. बोधप्रयोजकरूपत्वेनाङ्गीकृततया तत्त्वमसीत्यादौ तन्मते विविधा बोधप्रकारा अङ्गीक्रियन्ते, तथाहि, तत्त्वंपदशक्यतावच्छेदकसर्वज्ञत्व किञ्चिद्ज्ञत्वरूपधर्मद्वयपरित्यागेनतस्याखण्डार्थत्वाङ्गीकारात् 'चिदि,' ति बोध: कैश्चिदङ्गीकृत:, तत्त्वंपदशक्यतावच्छेदकधर्मयोरेकस्यैव हानमङ्गीकृत्य सर्वज्ञत्वविशिष्टचैतन्यं चैतन्याभिन्नमिति कैश्चित् किञ्चिज्ज्ञत्वविशिष्ट चैतन्यं चैतन्याभिन्नमिति कैश्चिच्च बोधोऽङ्गीकृत: । चैतन्यापरपर्याय ब्रह्माकाराखण्डवृत्तेराविर्भाव: कैश्चिदभ्युपगत: । तथाच किञ्चिद्ज्ञत्वेन भासमानस्य जीवापरपर्यायस्य चैतन्यस्य सर्वज्ञेन ब्रह्मणा सा. कमभेदो ऽद्वैतिभिरभ्युपेयते, तदनुरूपार्थ (कल्पना) नि. र्णयप्रक्रिया सा जहदजहल्लक्षणाङ्गीकारेण पूर्वनिर्दिष्टदिशानिरर्थबाधं निर्व्यूढा । तथाच तल्लक्षणाया: सर्वज्ञत्वकिंचिज्ज्ञत्वोपलक्षितचैतन्यबोध: फलमिति पर्यवस्यति) नच तर्हि तत्त्वमसीत्यादौ द्वै. तिनां मत इव सोयं देवदत्तइत्यत्रापि तत्पदस्य तत्सदृशार्थकत्वस्वीकारेण अबाधिताभेदान्वयबोधसम्भवे तादृशवृत्तित्वोपलक्षितार्थविष.

यकबोधस्वीकारो व्यर्थ इति वाच्यम्, द्वैतिमते जीवेश्वरयोर्भेदस्या ङ्गीकृततया तैस्तथाविधबोधस्वीकारेपि नक्षतिः, सोऽयं देवदत्तइत्यादौ तदिदंपदार्थयोर्व्यक्त्योर्भेदाभावेन तादृशबोधस्याङ्गीकर्तुमशक्यत्वात्। नच शक्त्या प्रवृत्तिनिमित्तरहितार्थस्योपस्थितिः न क्वाप्यनुभूयत इति वाच्यम, तर्हि तत्पदस्य तादृशवृत्तित्वोपलक्षितदेवदत्ते श, क्तेः स्वीकरणीयत्वात्, देवदत्तत्वरूपस्यैव प्रवृत्तिनिमित्तस्य [श. क्यतावच्छेदकस्य] अत्रापि सम्भवेन अनुपपत्तिविरहात। सेयं दी. पज्वालेत्यादौ ज्वालयोरन्योन्यभिन्नतया नैयायिकैः तत्सदृशार्थकत्व. स्वीकारेपि क्षत्यभावः। सोयं देवदत्त इत्यादौ व्यक्तिभेदाभावेन न सदृशार्थाभेदबोधस्सम्भवति। नच अद्वैतिभिरिव नैयायिकैरपि जहदजहल्लक्षणाङ्गीकारेणैव सोयं देवदत्त इत्यादौ निर्बाधमर्थस्य सू. पपादत्वे तादृशवृत्तित्वोपलक्षितदेवदत्तार्थकत्वस्वीकारः न समुचित इ ति वाच्यम्, पदार्थगौरवमसहमानैः नैयायिकैः गौण्या व्यञ्जना. याश्च वृत्त्यन्तरत्वस्येव जहदजहल्लक्षणाया अपि लक्षणान्तरत्वस्यान. ङ्गीकृतत्वात्। अद्वैतिनां मते सोयं देवदत्तइत्यादौ तत्त्वमसीत्या दाविव जहदजहल्लक्षणामूलकोव्यक्तिमात्रबोध एवाङ्गीक्रियते। नैयायि. कैस्तु तत्त्वमसीत्यादौ अग्निर्माणवक इत्यादाविव सदृशाभेदबोधएवा. भ्युपेयते, एतन्मते जीवेश्वरयो र्वास्तवभेदस्याङ्गीकृतत्वात्। वस्तुत. स्तु, सोयं दैवदत्त इत्यादौ तादिदंपदार्थयोरभेदान्वयानुपपत्ताव. पि घटोऽनित्य इत्यादौ विशेषणघटत्वादावनित्यत्वानुपपत्तौ योग्य. तावशेन घटादावनित्यत्वान्वयस्येव तत्रापि योग्यतावशेन तदिदंप दान्यतरार्थस्य तदन्यतरोपस्थाप्यविशेष्येणसाकमन्वयस्वीकारे नक्षति रित्यवगन्तव्यम्। अथवा प्रत्यभिज्ञाकाले इदंपदार्थे विशिष्टदे. वदत्ते तत्पदार्थदेशकालवैशिष्ट्यस्यैव अनुपपन्नतया योग्यतावशेन तत्पदोपस्थाप्यविशेष्येणैव इदंपदार्थान्वयस्समुचितः। प्रत्य

भिज्ञायाःसंस्कारसन्निकर्षोभयजन्यत्वेन प्रत्यक्षरूपतया प्रत्यभिज्ञास्थले बोधविचारोऽनावश्यकएव, यदि सोयं देवदत्तइत्यादिवाक्यादन्योच्चारिताच्छाब्दधीरनुभवसिद्धा तत्र पूर्वनिर्दिष्टदिशा बोधप्रकारो ग्राह्यः। सोयं देवदत्तइत्यादिशब्दाः प्रत्यभिज्ञाभिलापकाएवेति ग्राह्यम्। मतान्तरे लक्षितलक्षणापि क्वाचिदभ्युपेयते, द्विरेफपदस्य मधुकरे लक्षितलक्षणा, साच शक्यस्य रेफद्वयस्य स्वघटित[भ्रमरपद]वाच्यत्वरूपपरंपरासम्बन्धरूपैव। तथाच शक्यघटितपदवाच्यत्वरूपा सा लक्षणेति बोध्यम्। केचित्तु सिंहो माणवक इत्यादावपि तल्लक्षणामङ्गीकुर्वन्तः तत्स्थलसाधारण्येन स्वशक्यस्य परम्परासम्बन्धरूपालक्षितलक्षणेति वदन्ति॥

अनुभवो द्विविधः यथार्थोऽयथार्थश्चेति; अतः अनुभवरूपाणां प्रत्यक्षानुमितिशाब्दादीनामपि यथार्थत्वायथार्थत्वभेदेन द्वैविध्यं ग्राह्यम्। अतः प्रमात्मकप्रत्यक्षे लौकिकसन्निकर्षः भ्रमात्मकप्रत्यक्षे पित्तकामलादिदोषश्च कारणमिति ज्ञेयम्। प्रमात्मकानुमितिस्तु प्रमात्मकपरामर्शात् भ्रमात्मकपरामर्शाच्च जायते यथा वह्निव्याप्यधूमवान्पर्वत इति प्रमात्मकपरामर्शात्पर्वतो वह्निमानिति प्रमात्मकानुमितिरुत्पद्यते, धूमव्याप्यवह्निमान्पर्वतइति भ्रमात्मकपरामर्शादपि पर्वतो धूमवानिति प्रमात्मकानुमितिरुत्पद्यते। भ्रमात्मकानुमितिस्तु भ्रमात्मकपरामर्शादेव जायते। ह्रदोवह्निमान् ह्रदो धूमवानित्याद्यनुमितीनां व्याप्त्यंशे पक्षधर्मत्वांशे अंशद्वये वा भ्रमात्मकैरेव परामर्शैरुत्पद्यमानत्वात्। प्रमात्मकशाब्दबोधस्तु शक्तिप्रमातः शक्तिभ्रमतश्च जायते, पर्वतो वह्निमानिति वाक्यस्थले शक्तिप्रमातः वह्निमदभिन्नः पर्वत इति प्रमात्मकबोधो भवति। ह्रदो वह्निमानिति वाक्यस्थलेपि ह्रदपदस्य पर्वते शक्तिरिति शक्तिभ्रमात्

वह्निमदभिन्नः पर्वत इति प्रमात्मकबोधो भवति शक्तिभ्रमाच्छक्तिग्र- मातोऽपि भ्रमात्मकबोधो भवति । स्मृतिभिन्नं सर्वं ज्ञानमनुभवएव । संशयभिन्नं सर्वं ज्ञानं निश्चयएव । स्मृतेरपि निश्चयएवान्तर्भावः सर्वांशे प्रमात्मकं ज्ञानं पर्वतो वह्निमानित्यादिरूपः । पर्वतो व- ह्निमान् ह्रदो वह्निमानित्यादि समूहालम्बनज्ञानस्य न सर्वांशे प्रमा- त्वं सम्भवति, ह्रदे वह्न्यंशे भ्रमत्वात् । सर्वांशे प्रमात्वं नाम यथाश्रुते स्वव्यधिकरणप्रकारावच्छिन्ना या या स्वात्मिका विशेष्यता तत्तदनिरूपकत्वम्, स्वपदं विशेष्यतापरम, स्वव्यधिकरणप्रकारा- वच्छिन्नत्वञ्च स्वव्यधिकरणनिष्ठप्रकारतानिरूपितत्वम्, तथाच पूर्वोप दर्शितसमूहालम्बनज्ञाने स्वपदेन ह्रदनिष्ठविशेष्यतायाः परिग्रहणे स्वव्यधिकरणीभूतवह्निनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमेव व र्तत इति न तस्य सर्वांशे प्रमात्वम् । अत्र स्वव्यधिकरणत्व न स्वानधिकरणवृत्तितारूपम्, तथात्वे घटो द्रव्यमित्यादिज्ञाने तादृश प्रमात्वाभावप्रसङ्गः, स्वपदेन घटनिष्ठविशेष्यतायाः परिग्रहणे तद- नाधिकरणपटादिवृत्तिद्रव्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्व स्यैव तत्र सत्त्वात् । अतः स्वव्यधिकरणत्वं स्वाधिकरणवृत्तित्वा- भावरूपं विवक्षणीयम्, तादृशव्यधिकरणत्वं द्रव्यत्वे न सम्भवती- ति नातिप्रसङ्गः । या येति वीप्सानुपादाने ह्रदो वह्निमानित्यादि भ्रमेऽतिव्याप्तिः, स्वव्यधिकरणप्रकारावच्छिन्नज्ञानान्तरीयविशेष्यत्वानि- रूपकत्वस्य तत्र सत्त्वात्, वीप्सोपादाने ह्रदनिष्ठाया इदंज्ञाननि रूपिताया अपि विशेष्यतायाः परिग्राह्यतया तदनिरूपकत्वाभावा न्नातिप्रसङ्गः । अस्यायमनुगमः, विशेष्यताविशिष्टान्यत्वं सर्वांशे प्रमात्वम्, वैशिष्ट्यञ्च स्वविशिष्टविशेष्यतानिरूपकत्वसम्बन्धेन स्वप- दं विशेष्यतापरम् । स्ववैशिष्ट्यञ्च विशेष्यतायां स्वतादात्म्यस्व- व्यधिकरणनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन इति । द्रव्यत्वादि

ना घटाद्यवगाहि इदं द्रव्यमिति ज्ञानं जातित्वादिना ह्रदत्वाद्यव-गाहि वह्न्यभाववद्ध्रदादिविषयकं जातिमान् वह्न्यभाववानित्यादि-ज्ञानञ्च सामान्यरूपेण विशेषावगाहिज्ञानमित्युच्यते । इदं ज्ञानं प्रमा भवति । स्थाणुत्वादिना विशेष्यताव्यधिकरणधर्मेण पुरुषाद्य-वगाहि 'अयं पुरुषः' इति ज्ञानं भ्रम एव । विशेषरूपेण सामान्या-वगाहिज्ञानं नास्ति ।

—•अन्वयबोधविचारः•—

अथेदानीं विचार्यते कुत्र अभेदसम्बन्धेन बोधः कुत्र वा भे-दसम्बन्धेनेति । नामार्थयोरभेदसम्बन्धेनान्वयः अन्यत्रतु भेदसम्ब-न्धेन । भेदसम्बन्धोनाम अभेदातिरिक्तः स्वरूपादिसम्बन्धः । अभेदस्तु तादात्म्यसम्बन्धएव । प्रथममन्वयसम्बन्धेनान्वयवन्ति स्थ-लानि कानिचिदुदाह्रियन्ते । यथा नीलोघटः इत्यसमासस्थले नी-लघटइति समासस्थलेच (शक्यार्थबोधनस्थले) नीलाभिन्नो घट इति बोधः (अभेदसम्बन्धेन नीलविशिष्टो घट इति बोधः) गच्छन् चै-त्र इत्यादिकृदन्तस्थले वर्तमानकालिकगमनानुकूलकृतिमदभिन्नः चैत्र इति बोधः । एवं गतवान् गमिष्यन् चैत्रः गन्तव्यो ग्रामइत्यादि कृदन्तनामस्थलेषु अभेदसंसर्गका बोधा ज्ञेयाः । एवं चैत्रो धन-वान् गुणी मतिमान् तेजस्वी जटिलः नैयायिकः मीमांसकः व-स्तुग्राहकः इन्द्रियग्राह्य इत्यादि तद्धितान्तनामस्थलेषु महाबलः कृत-कृत्य इत्यादिसमासनामस्थलेषु च तत्तत्पदार्थयोरभेदसंसर्गका बोधा भवन्ति । एवं राजपुरुष इत्यादितत्पुरुषस्थले राजसम्बन्ध्यभिन्नः पुरुष इति बोधः [इदं लक्षणास्थलीयाऽभेदबोधस्थलोदाहरणम्] राजपदस्य राजसम्बन्धिनि लक्षणा स्वीकार्या, तत्पुरुषे पूर्वपदे ल-क्षणाया उत्तरपदार्थप्रधानतया (उत्तरपदार्थमुख्यविशेष्यतया) अन्व-

यबोधस्य स्वीकृतत्वेन तादृशान्वयबोधसिद्धिः । तत्पुरुषे पूर्वपदस्य लक्षणा उत्तरपदार्थप्रधानतयाऽन्वयबोध इति नियमस्तु प्रायकत्वाभिप्रायः, पूर्वकायः उत्तरकायः, अर्धपिप्पलीत्यादौ व्यभिचारात् कर्मधारयस्थलेतु क्वचिन्नलक्षणा कुत्रचिल्लक्षणा ; क्वचित्पूर्वपदे कुत्रचिदुत्तरपदेच लक्षणाङ्गीकार्या, यथा नीलोत्पलमित्यादौ न लक्षणा पुरुषव्याघ्र इत्यादौ उत्तरपदस्य व्याघ्रसदृशे लक्षणा, तमालवृक्ष इत्यादौ पूर्वपदस्य तमालनामके लक्षणा, पुरुषव्याघ्र इत्यादौ पूर्वपदार्थप्रधानतया नीलोत्पलं तमालवृक्ष इत्यादौ वुत्तरपदार्थप्रधानतया च अन्वयबोधसम्भवेन कर्मधारयस्थले न उत्तरपदार्थप्रधानतयैवान्वयबोध इति नियमोस्ति । रतिसुन्दरीत्यादौ रतिपदलक्ष्यस्य रतिनिरूपितसादृश्यप्रयोजकस्य सुन्दरीपदार्थैकदेशे सौन्दर्येन्वयः । ननु पदार्थः पदार्थेनान्वेति नत्वेकदेशेनेति नियमविरोधेन एकदेशान्वयो न युक्तः इतिचेन्न, चैत्रस्य गुरुकुलमित्यादौ चैत्रनिरूपितत्वस्यपदार्थैकदेशे गुरुत्वेऽन्वयस्वीकारेण एकदेशान्वयस्यापि स्वीकृतत्वात् । नच तादृशसाकांक्षास्थले एकदेशान्वयस्वीकारेपि रतिसुन्दरीत्यादिनिराकांक्षास्थले एकदेशान्वयोऽयुक्तः [साकांक्षास्थलएव एकदेशान्वयः स्वीक्रियते न निराकांक्षास्थलइत्यभिप्रायः] इति वाच्यम्, तर्हि रतिपदस्य सुन्दरीपदस्यवा रतिनिरूपितसादृश्यप्रयोजकसौन्दर्यविशिष्टे लक्षणायाः अन्यस्य तादृशार्थे तात्पर्यग्राहकत्वस्यच स्वीकारेण दोषाभावात् । तथाच पदार्थः पदार्थेनान्वेति न त्वेकदेशेनेति नियमस्यायमर्थः, उभयत्र पदार्थपदेन पदस्य शक्यो लक्ष्योर्थोवा प्रतिपाद्यते, पदार्थेनेत्यस्य पदोपस्थापितमुख्यविशेष्येणेत्यभिप्रायः, एकदेशेनेत्यस्य पदोपस्थापितविशेषणेनेत्याशयः । नियमस्यास्य प्रवृत्तिः समासस्थलेऽसमासस्थलेच ग्राह्या । अत एव मणिरायां नद्यां घोषइत्यसमासस्थले चित्रगुरित्यादिसमासस्थले मु.

त्ताबल्यो कृतस्य विचारस्य सामञ्जस्यमुपपद्यते । अन्यथा समासासमासस्थलेषु शक्यलक्ष्यस्थलेषुच नास्य नियमस्य विचारार्हता स्यात् । नच रामभक्त इत्यादौ भक्तिरूपैकदेशे रामस्यान्वयसम्भवेन एकदेशान्वयो दुष्परिहार इति वाच्यम्, अत्रापि भक्तपदस्यैव रामभक्तिविशिष्टे लक्षणायाः रामपदस्य तादृशार्थे तात्पर्यग्राहकत्वस्यच स्वीकारे क्षत्यभावात् । अथवा भक्तपदस्य साकाङ्क्षत्वेन एकदेशान्वयस्वीकारेपि क्षतिविरहात् । अथवा भक्तिः भजधात्वर्थत्वेन तस्याः प्रकृतिप्रत्ययसमुदायात्मकेन वाक्यरूपेण भक्तपदेनाप्रतिपाद्यत्वेन एकदेशान्वयप्रसक्तेरेवाभावात् । पदसमुदायात्मके समासे वाक्ये शक्तेः शक्यसम्बन्धरूपलक्षणाया वा अनङ्गीकारात् । अन्यपदार्थप्रधानो बहुव्रीहिः; सर्वत्र बहुव्रीहावुत्तरपदस्यान्यपदार्थे लक्षणा, पूर्वपदं तात्पर्यग्राहकम्, कृतप्रणाम इत्यादौ कृतिविषयप्रणामविशिष्टे प्रणामकर्तरिवा प्रणामपदस्य लक्षणाङ्गीकार्या, अन्यस्य तात्पर्यग्राहकत्वम्, नात एकदेशान्वयप्रसङ्गः । अपुत्र इत्यादौ अविद्यमानपुत्रविशिष्टत्वस्य पितरि असम्भवेन पुत्रपदस्य पुत्राभाववति लक्षणा । अपुत्र इति तत्पुरुषस्थले पुत्रभिन्न इत्येव बोधः । त्रिलोकीत्यत्र लोकत्रयसमुदायत्वावच्छिन्नबोधः । लोकत्रयमित्यत्र तत्पुरुषस्थले न समुदायत्वभानं, किन्तु लोकाभिन्नं त्रयमित्येव बोधः । ननु तत्पुरुषे लक्षणाया अङ्गीकार्यतया लोकत्रयमित्यत्र कस्य पदस्य कस्मिन् लक्षणाङ्गीक्रियते, विनापि लक्षणां पूर्वपदार्थलोकस्य अभेदसम्बन्धेन त्रित्वावच्छिन्नेऽन्वयसम्भवादितिचेन्न, तत्पुरुषे लक्षणानियमस्य पूर्वपदे लक्षणानियमस्यच अनियतत्वात्, भूतलमित्यादौ लक्षणां विनापि भुवा अभिन्नं तलमित्येव बोधात् । एवमव्ययीभावस्थलेपि नास्ति पूर्वोत्तरपदयो

रेकत्रैव लक्षणाङ्गीकारनियमः, उपकुम्भमित्यादौ उत्तरपदस्य कुम्भ समीपे शाक्यप्रतीत्यादौ पूर्वपदस्यैव शाक्लेशे लक्षणाया अङ्गीकृतत्वात् । अयमव्ययीभावः न पूर्वपदार्थप्रधान एव, उपकुम्भमित्यादौ पूर्वपदार्थप्राधान्येऽपि शाक्यप्रतीत्यादावुत्तरपदार्थप्राधान्येन बोधोदयात् । लक्षणात्वपरिहार्योऽत्र गुणी धनवान् मतिमानित्यादिषु न लक्षणाया आवश्यकता, प्रकृतिप्रत्ययैरेवाभिमतार्थबोधोदयात् ॥

ननु नामार्थयोरभेदसम्बन्धेनान्वयस्वीकारे निपातस्यापि नामतयो घटो न पटः अत्र घटो नेत्यादौ नञर्थीभूतभेदात्यन्ताभावादौ नामार्थस्य घटादेः कथं प्रतियोगितानिरूपकत्वसम्बन्धेनान्वय इति चेन्न, नामार्थयोर्निपातातिरिक्तत्वस्य विशेषणीयत्वात् । नच तथापि चन्द्र इव मुखमित्यादौ इवाद्यव्ययस्यापि नामतया चन्द्रस्य इवार्थीभूतसादृश्ये निरूपितत्वरूपभेदसम्बन्धेन तस्य च मुखे स्वरूपात्मकभेदसम्बन्धेनच कथमन्वय इति वाच्यम , नामार्थयोरव्ययातिरिक्तत्वस्यापि निवेशनीयत्वात् । नच निपाताव्ययानामपि कथं नामत्वमिति वाच्यम् , महाभाष्यकाराभिमतस्य सुबन्तत्व (सुब्योग्यता) रूपनामत्वस्य तत्राप्यङ्गीकृतत्वात् । (तत्रापि सुप उत्पद्य लुप्यन्तीति तेषामभिप्रायः) नच तर्हि नीलं घट इत्यादौ अभेदबोधप्रसङ्ग इतिवाच्यम् , समानविभक्तिकनामार्थयोरेवाभेदान्वयस्याङ्गीकारात् , नच तर्हि नीलघट इति समासस्थले अभेदबोधानुपपत्तिरिति वाच्यम् , विशेषणविशेष्यभावपरे समासस्थले विशेषणपदोत्तरं विशेष्यपदसमानविभक्तिप्रत्ययानामुत्पत्तिलोपयोरङ्गीकृतत्वेन उत्पत्तिमात्रेणैव समानविभक्तिकत्वस्याक्षतत्वात् । नच तर्हि धान्येन धनवान् राहोश्शिर इत्यादौ अभेदबोधो नस्यात् , तत्र समानविभक्तिकना

मार्थत्वविरहादिति वाच्यम् , नियमस्यास्य तादृशनामार्थयोर्भेदसम्बन्धेनान्वयविरहमात्रबोधकत्वेन ,तादृशनामार्थयोरेवाभेदसम्बन्धेनान्वयः नान्यत्रेत्यत्र तात्पर्यविरहेण च दोषाभावात् । नच अन्यत्रापि अभेदबोधाङ्गीकारे निपातादिस्थलेप्यभेदबोधप्रसङ्ग इति वाच्यम्, तादृशाकांक्षाया अभेदबोधाप्रयोजकत्वात् । नच तर्हि धान्येन धनवान् राहोरिशर इत्यादौ कथमभेदबोधसम्भव इति वाच्यम्, अनुभवानुरोधेनावत्याकांक्षाया अभेदबोधप्रयोजकत्वस्याङ्गीकृतत्वात् । नच नामार्थयोरिति नियमस्यनामत्वस्य लिङ्गवत्त्वरूपत्वेन विवक्षणेनैव अलिङ्गानां निपाताव्ययानां वारणसम्भवे निपाताव्ययातिरिक्तत्वस्य नामविशेषणत्वमफलमेवेति वाच्यम्, लिङ्गविशिष्टत्वरूपनामत्वस्य भाष्यकारानभिमतत्वेन तादृशनामत्वस्य निवेशयितुमशक्यत्वात्, [अथवा, अव्ययानां लिङ्गविशिष्टत्वस्यापि "सदृशं त्रिषु लिङ्गे,, ष्विति वचनेन प्रतिपादितत्वेन नामत्वस्य लिङ्गविशिष्टत्वरूपत्वेन परिष्कारेपि उपयोगविरहात् ]

अत्र नामार्थपदेन शक्तिलक्षणान्यतरवृत्त्युपस्थाप्यः अर्थो ग्राह्यः; नातो महाबलो रामइत्यादिलक्षणास्थलेषु (बहुव्रीह्यादिस्थलेषु) अभेदान्वयबोधानुपपत्तिः ॥

अथ विद्यार्थिनां बोधसौकर्याय भेदसम्बन्धेन अन्वयबोधस्थलानि कानिचित् दिङ्मात्रमुदाह्रियन्ते -राज्ञः पुरुष इत्यादिषु प्रकृतिप्रत्ययार्थान्वयस्थलेषु षष्ठ्यर्थीभूतसम्बन्धित्वादौ राज्ञो निरूपितत्वसम्बन्धेन तस्य पुरुषे स्वरूपसम्बन्धेनच अन्वयः । एवं चन्द्र इव मुखमित्यत्र इवार्थे सादृश्ये चन्द्रस्य निरूपितत्वसम्बन्धेन तस्यच मुखे स्वरूपादिसम्बन्धेन च अन्वयः । एवं घटं जानातीत्यत्र द्वितीयार्थविषयतारूपकर्मत्वे प्रकृत्यर्थस्याधेयत्वसम्बन्धेन क.

मताया धात्वर्थे निरूपकत्वसम्बन्धेन धात्वर्थज्ञानस्याख्यातार्थे आश्रयत्वे निरूपितत्वसम्बन्धेन आख्यातार्थस्य चैत्रादौ स्वरूपसम्बन्धेन चान्वयः । एवं घटो न पटः दृष्ट्वा गतः द्रष्टुं यातीत्यादीन्यनेकस्थलानि, भेदसंसर्गकान्वयबाधे प्रयोजकानि सन्ति । तथाच परस्परं प्रकृतिविभक्तिप्रत्ययार्थयोः विभक्तिप्रत्ययधात्वर्थयोः धात्वाख्यातार्थयोः आख्यातार्थमुख्यविशेष्ययोः निपातार्थमुख्यविशेष्ययोः क्त्वातुमुन्नादिप्रत्ययार्थधात्वर्थयोः इतराव्ययार्थधात्वर्थमुख्यविशेष्याणाञ्च भेदसम्बन्धेनान्वयो ग्राह्यः । इत्थमनुभवानुरोधेन अन्यान्यपि भेदसम्बंधेन अभेदसम्बंधेनच अन्वयबोधस्थलानि ग्राह्याणि ॥

प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमः, अतो राज्ञः पुरुष इत्यत्र षष्ठीविभक्तिप्रत्ययः प्रकृत्यर्थराजान्वितसम्बन्धिता बोधको भवति, तथाच राजसम्बन्धितावान् पुरुष इति बोधः एवमन्यत्रापि ग्राह्यम् । नन्वेवंसति नीलो घट इत्यादौ प्रकृत्यर्थस्य नीलत्वविशिष्टस्य नीलपदोत्तरवर्ति सुप्प्रत्ययार्थेनान्वयं विनैव विशेष्ये घटादावन्वयसम्भवेन नियमोऽयं व्यभिचरतीतिचेन्न, नीलपदोत्तरवर्तिविभक्तिप्रत्ययस्याप्यभेदार्थकत्वेन नीलाभिन्नो घट इति बोधसम्भवेन व्यभिचारविरहात् । नच तर्हि राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसम्बन्धित्वस्येव अत्रापि नीलाभेदस्य स्वरूपसम्बन्धेन प्रकारविधया भानसम्भवेन अत्र सर्वानुभूतस्य अभेदसंसर्गकबोधस्य अपलापप्रसङ्ग इति वाच्यम्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमस्य विशेषणवाचकपदोत्तरवर्तिविभक्तीतरस्थलेषु प्रवृत्त्यङ्गीकारेण अनुपपत्त्यभावात् । नच तर्हि विशेषणवाचकपदोत्तरवर्तिविभक्तेर्निरर्थकत्वप्रसङ्ग इति वाच्यम्, इष्टापत्तेः । नच तर्हि विशेषणवाचकपदोत्तरवर्तिविभक्तेः निरुपयोग इति वाच्यम्,

"विभक्तिः पुन रेका स्याद्विशेषणविशेष्ययो,,रिति वचनानुसारेण साधुत्वार्थकत्वेन विशेषणवाचकपदोत्तरवर्तिविभक्तेरुपयोगसम्भवात् । अतएव नीलोघटः नीलं घटं नीलेन घटेनेत्याद्यसमासस्थलेषु अभेदसंसर्गकबोधोपपत्तिः ॥

--शास्त्रेष्वभिप्रायभेदाः--

न्यायाद्वैतवेदान्तमतयोः विद्यमानो भेदः सङ्ग्रहेण निरूप्यते ॥

न्या- मते— परमात्मापरनाम्नि ईश्वरे ज्ञानेच्छाकृतिसुखाद्यधिकरणत्वं सत्ताधिकरणत्वञ्च अङ्गीक्रियते, जीवात्मनां नानात्वं तेषु परस्परभेदः जीवानां ईश्वराद्भेदश्च सत्यः अङ्गीक्रियते ॥

वे- मते— परमात्मापरनामधेयस्य परब्रह्मणः सच्चिदानन्दरूपत्वं (सत्ताज्ञानानन्दरूपत्वं) अङ्गीक्रियते, अन्तःकरणरूपोपाधिभेदादेव जीवात्मनां परस्परभेदः, परब्रह्मणोपि भेदः अङ्गीक्रियते ॥

न्या- मते— वेदस्य वाक्यसमूहत्वादिहेतुभिः "तस्मात्तेपानात्त्रयो वेदा अजायन्त,, इत्यादिश्रुतिभिश्च सादित्वं । सादित्वेन शब्दबुद्ध्योः द्विक्षणावस्थायित्वनियमेनच सान्तत्वञ्चाभ्युपेयते ॥

वे- मते— अस्य महतोभूतस्य निश्वसितमेतदित्यादिश्रुतिभिः वेदस्य आविर्भावतिरोभावावेव (ईश्वरात् सृष्टिकालजन्यत्वं प्रलयकालनश्यत्वञ्च) अभ्युपेयेते । नोत्पत्तिविनाशौ क्षणभेदेन ॥

न्या- मते— पृथिव्यप्तेजोवायुपरमाणूनां आकाशादिपञ्चकस्य केषांचित् गुणानां सामान्यविशेषसमवायात्यन्तान्योन्याभावादीनां बहूनां नित्यत्वमङ्गीकृतम् ॥

वे= मते— न्यायमते नित्यत्वेन उपदर्शितानां तेषामापेक्षिकं नित्यत्वमङ्गीक्रियते । न निरपेक्षं तत् ॥

न्या= मते— घटादिसकलप्रपञ्चे आश्रयभेदेन सादित्वानादित्वसान्तत्वानन्तत्वादिविरुद्धधर्मेषु विद्यमानेष्वपि सत्यत्वं(वर्तमानत्वादिरूपं) पुनरेकरूपमेव पारमार्थिकं परमात्मसाधारणम् ॥

वे= मते— घटादिप्रपञ्चे ब्रह्मभिन्ने व्यावहारिकं सत्यत्वमेव, ब्रह्मण्येकस्मिन्नेव पारमार्थिकसत्यत्वाङ्गीकारात्, मतेऽस्मिन् ब्रह्माभिन्नप्रपञ्चस्य सत्त्वेनबाध्येत ब्रह्मवत् असत्त्वे न प्रतीयेत शशविषाणवत् । अतो बाधितत्वात् प्रतीयमानत्वाच्च सदसद्विलक्षणत्वरूपं मिथ्यात्वमेवाङ्गीक्रियते ॥

न्या= मते— शुक्ताविदं रजतमिति ज्ञानस्थले शुक्त्यभिन्ने इदंत्वावच्छिन्ने रजतत्वं प्रकारतया भासते, नतु शुक्तौ रजतमन्यादृशमुत्पद्यत इत्यङ्गीक्रियते ॥

वे- मते— तस्मिन् स्थले प्रतिभासमानकाले शुक्तौ प्रातिभासिकं रजतमन्यादृशमुत्पद्यत इत्यङ्गीक्रियते, एतन्मते पदार्थस्य त्रैविध्यमङ्गीकृतम्, पारमार्थिकं, प्रातिभासिकं, व्यावहारिकंचेति, आद्यं ब्रह्म द्वितीयं घटादिप्रपञ्चजातं तृतीयं शुक्तिरूप्यादि,

न्या= मते— द्रव्यादय स्सप्तपदार्था अङ्गीक्रियन्ते ॥

वे= मते— द्रव्यमेकएव पदार्थः गुणकर्मसामान्यादयः स्वाश्रयेण द्रव्येण न भिद्यन्ते' समवायविशेषाः न स्वीक्रियंते ॥

न्या= मते— तादात्म्यं अभेदापरपर्यायं घटकलशयोः नीलघटयोः इत्यादिस्थलेष्वङ्गीक्रियते ॥

वे= मते— भेदसहिष्णुरभेदएव तादात्म्यतया अङ्गीक्रियते,

तच्च मृद्घटयोः सुवर्णकटकयोश्च इत्यादावङ्गीक्रियते ॥

न्या=मते— उपादानं समवायिकारणापरपर्यायं एकविधमेव, तच्च घटपटादिकारणीभूतकपालतन्त्वादिकं भवति ॥

वे=मते— परिणाम्युपादानं विवर्तोपादानंचेति द्विविधं तत्, आद्यं जगत्कारणीभूता माया, द्वितीयं जगत्कारणं ब्रह्म,

न्या- मते— लक्षणं द्विविधं व्यावहारिकं व्यावर्तकंचेति, आद्यं पृथिव्यादीनां पृथिवीत्वादिकं, द्वितीयं पृथिव्यादीनां गन्धादिकम् ॥

वे-मते— लक्षणं द्विविधं तटस्थलक्षणं स्वरूपलक्षणंचेति, आद्यं ब्रह्मणः जगत्कारणत्वादिकं, द्वितीयं सच्चिदानन्दादिकं, न्यायमते ज्ञानशब्देन उच्यमानं यत् तदेतन्मते अन्तःकरणवृत्तिरिति व्यवह्रियते, अन्यच्च ब्रह्माभिन्नं धर्मिरूपज्ञानञ्च एकमस्ति ॥

न्या- मते— आत्यन्तिकदुःखध्वंसो मोक्षः सच उपासनादिभिः लभ्य इत्यङ्गीक्रियते ॥

वे-मते— जीवस्य ब्रह्मस्वरूपताप्राप्तिरेव मोक्षः; सच ब्रह्मापरोक्षज्ञानलभ्यः इत्यङ्गीक्रियते ॥

न्या... मते— परमाणुभिः पृथिव्यप्तेजोवायूनां महतामुत्पत्तिः॥

वे... मते.... आत्मन आकाशस्सम्भूतः, आकाशाद्वायुः, वायोरग्निः अग्नेरापः; अद्भ्यः पृथिवी इति उत्पत्तिक्रमः अङ्गीक्रियते॥

न्या... मते... अज्ञानं न भावरूपं किन्तु ज्ञानाभावएव, ब्रह्माऽज्ञानमित्यादौ ब्रह्मविषयकं यत् ज्ञानं तदभावः बोध्यते ॥

वे... मते... अज्ञानमिति कश्चन भावपदार्थः, ब्रह्माऽज्ञानमि.

त्यादौ ब्रह्मविषयकं अज्ञानमेव बोध्यते, परन्तु अत्र अज्ञाने ब्रह्मवि-षयकत्वसम्भवेऽपि नैयायिकमते ज्ञाने प्रकारता, विशेष्यता, संसर्गतारूपविषयतानिरूपकत्वमिव वेदांतिमते तादृशत्रितयात्मकविषयता निरूपकत्वं नाङ्गीक्रियते, किन्तु तत्तद्विषयनिष्ठविषयतानिरूपकत्व-मात्रमेवाङ्गीक्रियते। एतन्मते कर्णशष्कुल्यवच्छिन्ननभसः श्रोत्रत्वमिव अन्तःकरणावच्छिन्नचैतन्यस्य [अन्तःकरणप्रतिबिम्बितचैतन्यस्य] जीवत्वव्यवहारः। केचन मायायां चैतन्यप्रतिबिम्ब ईश्वरः। अ-विद्यायां चैतन्यप्रतिबिम्बः जीवः इति वदन्ति। केचित्तु अविद्यायां चित्प्रतिबिम्ब ईश्वरः अन्तःकरणे चित्प्रतिबिम्बः जीव इति वदंति। अन्येतु, अविद्यायां चैतन्यस्य प्रतिफलने प्रतिबिम्बो जीवः बिम्बभूतः ईश्वरः इति वदन्ति। अपरेतु, अन्तःकरणावच्छिन्नो जी-वः अविद्यावच्छिन्नः ईश्वर इति वदंति। तथाच अवच्छेदकभे-देनैव जीवात्मनां ईश्वरस्य भेदः न स्वतः। न्यायमते तु स्वतएव भेदः॥

न्या... मते.... त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणमनोभेदेन षड्विध मिन्द्रियम्॥

वे... मते.... मनोविहाय त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणभेदेन पञ्चविधं इन्द्रियम्॥

न्या... मते.... प्रत्यक्षानुमानोपमानशब्दाः चत्वारि प्रमाणानि॥

वे... मते.... प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धय षट्प्रमाणानि॥

न्या... मते... ज्ञानं बुद्धिरीति समानार्थके पदे॥

वे... मते— अन्तःकरणवृत्तिरेव ज्ञानमिति निश्चयात्मकमन्तः

करणमेव बुद्धिरिति व्यवह्रियते ॥

न्या... मते.... मनः चित्तमिति तुल्यार्थके पदे ॥

वे... मते···· संशयात्मकमन्तःकरणं मन इति, स्मरणात्मकमन्तःकरणं चित्तमिति व्यवह्रियते ॥

न्या... मते... एतन्मते जीवेश्वरयोः भेदस्य अङ्गीकृततया तत्त्वमसीत्यादौ "सिंहो माणवक,, इत्यत्रेव त्वंपदार्थे तत्पदार्थसदृशाभेदबोधः अङ्गीक्रियते ॥

वे... मते.... तत्त्वमसीत्यादौ किञ्चिदृज्ञत्वादौ किंचिदृज्ञत्वविशिष्टचैतन्यरूपत्वंपदार्थे सर्वज्ञत्वविशिष्टचैतन्यरूपतत्पदार्थभेदस्य बाधितत्वेपि जहदजहल्लक्षणया सर्वज्ञत्वाकिंचिदृज्ञत्वादिविशेषणपरित्यागेन विशेष्यमात्रविषयकनिर्विकल्पकबोधः (वस्तुतस्तु, तत्त्वमसीत्यादौ ब्रह्माकाराखण्डवृत्तिरेवा]ङ्गीक्रियते कार्याविर्भावविषये तत्तन्मतीयाभिप्रायभेदबोधकः श्लोकोयं प्रदर्श्यते ॥

श्लो "आरम्भवादः कणभक्षपक्षः सङ्घातवादस्तु भदंतपक्षः।
सांख्यादिपक्षः परिणामवादः वेदांतिपक्षस्तु विवर्तवादः॥इति॥

बालानां विज्ञेयानि सूत्रस्य भाष्यस्य अधिकरणस्य व्याख्यानस्य च लक्षणानि क्रमेण प्रदर्श्यन्ते॥

श्लो॥ अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यंच सूत्रं सूत्रविदो विदुः॥
सूत्रस्थं पदमादाय वाक्यैस्सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदो विदुः॥
विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
(सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः) ॥

प्रयोजनश्च पंचैतत् प्राञ्चोधिकरणं विदुः,
पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना,
आक्षेपस्य समाधानं व्याख्यानं पंचलक्षणम् ॥

* एतानि षड्दर्शनानीत्युच्यन्ते......

श्लो॥ पाणिनेः जैमिनेश्चैव व्यासस्य कपिलस्यच ।
कणादस्याक्षपादस्य दर्शनानि षडेवहि ॥

कणादेन भावः अभावश्चेति प्रथमं पदार्थस्य द्वैविध्येन विभागः कृतः । समनन्तरं भावस्य द्रव्यगुणकर्मसामान्यविशेषसमवायभेदेन षाड्विध्येन विभागः कृतः । अक्षपादेनतु प्रमाणप्रमेयेत्यादिना दीपिकोक्तरीत्या पदार्थस्य षोडशविधत्वेन विभागः कृतः । अन्नम्भट्टेनतु तन्मतद्वयं मनसि निधाय द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्तपदार्था इति विभागः कृतः । मीमांसकैः अभावः अधिकरणात्मकत्वेनाङ्गीकृतः ॥ इति, दिङ्मात्रमुदाहृतम् ॥

प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः पदार्थग्राहकप्रमाणानि ॥

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥

इत्यादिश्लोकोक्तानि पदशक्तिग्राहकानि ॥

श्लो॥ संयोगो विप्रयोगश्च साहचर्यं विरोधिता,

इत्यादिना मदीयदीपिकाटीकायां सोदाहरणं प्रदर्शितानि, संयोगादीनि शक्तौ तात्पर्यग्राहकानि ॥ मीमांसायां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि कर्माङ्गत्वग्राहकानि षट्प्रमाणानि,

एषु पूर्वपूर्वस्य प्राबल्यं उत्तरोत्तरस्य दौर्बल्यम्, श्रुत्यर्थपाठस्था. नमुख्यप्रवृत्तिक्रमाख्यानि कर्मक्रमबोधकानि षट्प्रमाणानि, एष्वपि पूर्वपूर्वस्य प्राबल्यं ॥ तत्प्रख्य तद्व्यपदेश योग वाक्यभेदाख्यानि चत्वारि नामधेयनिमित्तानि ।

श्लो ॥ उपक्रमोपसंहारौ अभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णये ॥

इति श्लोकोक्तान्युपक्रमादीनि ग्रन्थतात्पर्यग्राहकाणि ॥

इतःपरं धर्मशास्त्रीयो विचारस्संग्रहेण क्रियते । धर्मशास्त्रे. श्रुतिस्मृतिसदाचाराणां त्रयाणां धर्मग्राहकप्रमाणत्वं सर्वसंमतंमनुनातु

श्लो ॥ वेदोखिलो धर्ममूलं स्मृतिशीलेच तद्विदाम ।
आचारश्चैव साधूना मात्मनस्तुष्टिरेवच ॥

इत्यादिना शीलात्मतुष्टिभ्यां साकं पञ्चप्रमाणाण्यङ्गीकृतानि तत्र श्रुतिर्वेदः प्रसिद्धः । स्मृतिः धर्मशास्त्रेतिहासपुराणादीनि । वेदार्थविदां सम्भावनीयताहेतुरात्मगुणसम्पद्रूपं सच्छीलमपि प्रमा. णं, यथा, युधिष्ठिरस्य यक्षरूपधारिधर्मात् एकोदरभीमाद्यनादरेण भिन्नोदरकुलजीवितवरणादिरूपम । वेदार्थविदामाचारोनाम शौचा चमनादिरूपः । तादृशानां परमधार्मिकाणां मनस्तुष्टिश्च प्रमाणं । सैवात्मतुष्टिरित्युच्यते, यथा धर्मत्वेन संशयिते प्रमाणान्तरागोच. रेऽर्थे परमधार्मिकस्य अयमेव धर्मो भविष्यतीति या मनस्तुष्टिः [अन्तःकरणप्रवृत्तिः) सा आत्मतुष्टिः, वैकल्पिकेषु पदार्थेषु यस्मिन् गृह्यमाणे आत्मनः प्रीतिः सैवात्मतुष्टिरिति भावः । अस्मिन्नर्थे कालिदासीयं— "सतांहि सन्देहपदेषु वस्तुषु, प्रमाणमन्तःकरण प्रवृत्तयः,, ॥ इति वचनमुपस्थाप्यते ॥

सिद्धेचैवं श्रुतिस्मृत्यादीनां प्रामाण्ये पूर्वपूर्वस्य प्राबल्यं उत्तरोत्तरस्य दौर्बल्यञ्च वेदितव्यम् ॥

तत्र वचनानि मनुः— "श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ॥

गौतमः— "तुल्यबलविरोधे विकल्पः,,

लोकाक्षि.— 'श्रुतिस्मृतिविरोधेतु श्रुतिरेव गरीयसी,

चतुर्विंशतिमते— 'स्मृतेर्वेदविरोधेतु परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत्,

लोकाक्षिः— श्रुतिस्मृतिविहितो धर्मः, तदलाभे शिष्टाचारः प्रमाणम्,

— 'श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ।
पूर्वं पूर्वं बलीय स्स्या दिति न्यायविदो विदुः,

व्यासः— तस्माद्विरोधे धर्मस्य विचार्य गुरुलाघवम् ।
यतो भूयस्ततो विद्वान् कुर्याद्धर्मविनिर्णयम् ॥

शिष्टलक्षणं बोधायनः— 'शिष्टाः खलु विगतमत्सराः निरहंकाराः कुम्भीधान्या अलोलुपाः दम्भदर्पलोभमोहक्रोधविवर्जिता इति,

धर्मलक्षणं— 'चोदनालक्षणोऽर्थो धर्मः,

विश्वामित्रः— यमार्याः क्रियमाणन्तु शंसन्त्यागमवेदिनः, ।
सधर्मोयं विगर्हन्ते तमधर्मं प्रचक्षते,

व्यासः— सत्यं दमः तपश्शौचं सन्तोषो ह्रीः क्षमार्जवम् ।
ज्ञानं शमो दया ध्यानं एष धर्मस्सनातनः ॥

सदाचारलक्षणं— सदाचारवतां पुंसां जितौ लोकावुभावपि ।
साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः
तेषामाचरणं यत्तु सदाचारस्सउच्यते ॥
(इति विष्णुपुराणे)

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
श्रुतिस्मृत्यविरोधेन सदाचारस्सउच्यते ॥
(इति संस्कारमंजर्यां)

सदाचारेण देवत्वं ऋषित्वञ्च तथैवच।
प्राप्नुवन्ति कुयोनित्वं मनुष्यास्तद्विपर्यये ॥

वशिष्ठः— आचारहीनं न पुनन्ति वेदाः।
यद्यप्यधीतास्सह षड्भिरङ्गैः ॥
येनास्य पितरो याताः येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्नदुष्यति ॥

यत्र श्रुत्यादयो न सन्ति तत्र परिषद्वचनं प्रमाणमित्याह ॥

मनुः— अनाम्नातेषु धर्मेषु कथं स्यादितिचेद्भवेत्।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥

गौतमः— अनाम्नाते दशावरैश्शिष्टैरूहवद्भिः प्रशस्तं कार्यमिति।
यत्तैः प्रशस्तमित्युक्तं तत्कार्यमिति तदर्थः ॥

याज्ञवल्क्यः— चत्वारो वेदधर्मज्ञाः परिषत्त्रैविध्यमेव वा।
सा ब्रूते यं स धर्मः स्यात् एको वाध्यात्मवित्तमः॥

त्रैविध्यमित्यनेन ऋगादिवेदत्रयज्ञाः धर्मज्ञाश्च त्रयोवा परिषदित्यभिप्रायः ॥

अस्मिन्नर्थे श्रुतिः— ये तत्र ब्राह्मणास्सम्मर्शिनः, युक्ता आयुक्ताः,
आलूक्षा धर्मकामा स्युः, यथा ते तत्र वर्तेरन्,
तथा तत्र वर्तेथाः इति ॥

तच्च श्रुत्यादिवत्प्रमाणमित्याह यमः—
वेदाः प्रमाणं स्मृतयः प्रमाणं वेदार्थयुक्तं वचनं प्रमाणम्,
यस्य प्रमाणं न भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणं इति ॥

पराशरः— त्रैविद्यो हैतुकस्तर्की ह्यङ्गविद्धर्मपारगः।

त्रयश्चाश्रमिणः पूर्वे परिषदेषा दशावरा ।
अव्रतानाममन्त्राणां जातिमात्रोपजीविनां ।
सहस्रशस्समेतानां परिषत्त्वं न विद्यते ।
यां यां वेदविदो ब्रूयुः त्रयोप्येनस्सु निष्कृतिम् ।
सा तेषां पावनाय स्यात् पवित्रं विदुषां हि वाक् ।

एतदल्पाल्पपापविषयकं । पातकेतु शतं परिषत् । सहस्रं महदादिषु । उपपातकेतु पञ्चाशत् । स्वल्पे स्वल्पं तथा भवेत् ।

बोधायन.—बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः ।
तस्मादवाच्यो ह्येकेन बहुज्ञेनापि संशये ॥
[इदं पापप्रायश्चित्तनिर्णये ग्राह्यम्]

याज्ञवल्क्य.—अज्ञेभ्यो ग्रन्थिनः श्रेष्ठाः ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठाः ज्ञानिभ्यो व्यवसायिनः ॥
एकोपि वेदविद्धर्मं यं विपश्येद्विचक्षणः ।
स एव परमो धर्मो नाज्ञानामुदितोदितैः ॥

बोधायनोपि—धर्मशास्त्ररथारूढाः वेदखड्गधरा द्विजाः ।
क्रीडार्थमपि यं ब्रूयुः स धर्मः परमो मतः ॥

प्रचेताः—अमीमांसा बहिश्शास्त्राः येचान्ये वेदवर्जिताः ।
यत्ते ब्रूयुः न तत्कुर्यात वेदाद्धर्मो विधीयते ॥

धर्मविप्रतिपत्तौ सुमन्तुः—यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।
उदितेऽनुदितेचैव होमभेदो यथा भवेत् ॥
तस्मात्कुलक्रमायात माचारंत्वाचरेद्बुधः ।
स गरीयान्महाबाहो धर्मशास्त्रोदितादपि ॥ इति ।

धर्मज्ञसमयोपि प्रमाणमित्याह आपस्तम्बः—धर्मज्ञसमयः प्रमाणं वेदाश्चेति । यः स्वकुलपरम्परायात आचारः स सम्प्र,

दाय इत्युच्यते सम्प्रदायस्यापि धर्मशास्त्राविरुद्धत्वे सन्मार्गवृत्तित्वे. च प्रामाण्यं वेदितव्यम् ॥

इत्येवंविधान्यत्यावश्यकानि प्रमाणवचनान्यालम्बनीकृत्य पर्यव सन्नमावेदयामि यथामति । तथाहि श्रुतिस्मृतिसदाचाराणां त्रया. णां सम्मतो धर्मः निर्विशंकमनुष्ठेयतां भजते, यथा यागादिः आ. चारविरुद्धोऽपि श्रुतिस्मृत्यनुमतश्चेन्निर्विशङ्कमनुष्ठेय एव, प्रबलप्रमा. णमूलकत्वेन प्रत्यवायशङ्काविरहात । क्वचिद्देशे निन्द्यमानोपि क्व. चन देशे अभिनन्द्यमानोपि "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच । समानप्रवरांचैव स्पृष्ट्वा चान्द्रायणं चरे,, दित्यादिस्मृ. त्या गर्ह्यमाणोपि मातुलसुतापरिणयः "तृमां जहुमातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव,, इति श्रुत्यनुमतत्वादनुष्ठेय एवेति बहूनामभिप्रायः, तथाच स्मृत्याचारविरुद्धोपि धर्मः श्रुत्यनुमतश्चेद नुष्ठेय एवेति भावः । श्रुतिस्मृत्युभयविरुद्धः श्रुतिविरुद्धः स्मृति. विरुद्धोवा आचारः न प्रमाणम् । श्रुतिविरुद्धा स्मृतिरपि न प्रमा णमेव । अतः श्रुतिस्मृत्याचारेषु पूर्वपूर्वस्य प्राबल्यं उत्तरोत्तर. स्य दौर्बल्यञ्च वेदितव्यम । अतः स्मृतिविरुद्धोपि श्रुतिसम्मतआचा रः प्रमाणमेव । श्रुतिविरुद्धश्चेत् स्मृत्यनुमतोपि नाचारः प्रमाणमि ति वेदितव्यम् । एषु पूर्वपूर्वस्य प्राबल्येन आचारानुरूपायाः स्मृ तेः स्मृत्यनुरूपायाः श्रुतेर्वाऽनुपलम्भे स्मृत्यादुयुत्तरोत्तरेण श्रुतिपर्य. न्तं पूर्वपूर्वकल्पनाद्वारैव स्मृत्याचारयोः प्रामाण्यम, अवेदमूलकस्य प्रामाण्यविरहात्, तथाच आचारेण स्मृतिमनुमाय स्मृत्यातु ताद. शी श्रुतिरनुमेयेति सिद्धम् । एवमेव श्रुतिलिङ्गवाक्यप्रकरणस्थान. समाख्यारूपकर्माङ्गत्वग्राहकप्रमाणेष्वपि उत्तरोत्तरस्य श्रुतिपर्यन्तं पूर्वे पूर्वसर्वकल्पनाद्वारैव प्रामाण्यम् (नहि केवलश्रुतिः कल्पनीया उत्त.

रोत्तरेण) अश्रुतिमूलकस्य प्रामाण्यविरहात् । एषु षट्स्वपि पूर्व-पूर्वस्यैव प्राबल्यं उत्तरोत्तरस्य दौर्बल्यमेव तथाच तुल्यबलविरोधे विकल्पस्य व्यवस्थापितत्वेन तुल्यबलयोः [अर्थवादभिन्नयोः] श्रुत्योः द्वयोरेव विरोधेवा तादृशयोः स्मृत्योरेव वा विरोधे विकल्पो ग्राह्यः, तथाच श्रुत्योरेव विरोधे श्रुतिविहितस्य धर्मद्वयस्यापि परिग्राह्यता एकेन तद्द्वयस्यानुष्ठातुमशक्यतया (क्वचिच्छक्यत्वेप्युभयानुष्ठानस्य अनुचिततयाच) यथा कल्पसूत्रं व्यवस्थितविकल्पेन एक एव धर्मोऽनुष्ठेयः । स्मृत्योर्विरोधेतु देशाचाराद्व्यवस्थया बहुशिष्टसम्मत्या स्वमनःप्रवृत्त्यनुरोधेनवा विकल्पो निर्वाह्यः, तथाच स्वदेशाचारबहु-शिष्टसम्मत्योरपरिज्ञाने सङ्कटेषु एकस्मिन् पक्षे निरभिनिवेशेन ऊहावता विदुषा स्वान्तःकरणप्रवृत्तिः प्रमाणीकार्या । श्रुतिविरोधे उ-दाहरणन्तु "उदिते जुहोति अनुदिते जुहोति "उदितानुदिते जु-होतीत्यादिकं बोध्यम् । श्रुतिस्मृत्योर्विरोधेतु श्रुतिरेव गरीयसीति सुप्रसिद्धोह्ययं विषयः । किन्तु बहूनां श्रुतीनां स्मृतीनांवा विरुद्धार्थद्वयविषयकत्वे अवगते तदा अर्थवादभिन्नश्रुतिस्मृतिभूयस्त्वं (श्रु-तिस्मृत्यादिनिष्ठाधिकसंख्यां) लाघवञ्चानुसृत्य धर्मनिर्णयः कार्यः । यदि श्रुतिस्मृत्याचारैरनवगते कस्मिंश्चिन्नूतने विषये संशयः स्यात् तदा तद्विषयानुसारेण प्रवर्त्स्यमानायां सभायां बहुपण्डिताभिप्रायमनुसृत्य धर्मनिर्णयेन स संशयोऽपनेयः । यदि स्वके देशे नगरे जनपदेवा नूतनधर्मे संशये तद्देशस्थानां तन्नगरस्थानां तज्जनपद-स्थानाञ्च पक्षपातरहितानां धर्मज्ञानां विदुषां बहूनां सम्मतिमनुरुध्य धर्मनिर्णयः कार्यः । यदि तत्र न बहूनां धर्मज्ञानां समावे-शावकाशः तदा स्वकुलीनस्यान्यस्यवा तदा तत्रोपलब्धस्यात्मविदो वेदार्थविदः कर्मठस्य वा तदन्यतमस्य एकस्यैव सकाशात् अथवा स्वकुलीनस्य धर्मविदः अथवा स्वकुलवृद्धस्य स्वेन पक्षपातराहित्येन

मन्यमानस्य यूनोवा आन्तिकस्थस्य विदुषस्सकाशात् अविदुषा पुरुषेण धर्मनिर्णयस्सम्पाद्यः। विदुषातु तदा आत्मतुष्ट्या धर्मोनिर्णेयः। अविद्वत्प्राये ग्रामे स्थितेन अविदुषातु तादृशनूत्नविषये संशयं तदा समुपास्थितस्य कस्यचन वृद्धस्य बहुमानपात्रस्य मुखादपनीय तद्धर्मकृत्यं निर्वर्त्य समनन्तरं विशेषविदो मुखात्स विषयो निर्धार्यः। कदाचिद्धर्मनिर्णये परमधार्मिकस्य शीलमपि प्रमाणीकार्यम्। शीलंनाम यस्य कस्यापि धार्मिकस्य यदा कदापि सम्भूता प्रवर्तना (अनुष्ठानं) आचारोनाम तत्कुलपरम्परायातो नुष्ठानप्रकारः सम्प्रदायापरपर्यायः इति शीलाचारयोर्भेदोऽवगन्तव्यः। ननु शीलस्य कथं प्रामाण्यम्, तथात्वे 'कतक (कथित) भरद्वाजौ व्यत्यस्य भार्ये जग्मतुः 'वशिष्ठश्चण्डालीमक्षमालीम प्रजापतिश्च स्वां दुहितरं 'परशुरामेण पितृवचनानुसारिणा मातुश्शिरश्छिन्नं इन्द्रचन्द्रावहल्यातारे जग्मतुः इत्यादिवाक्यबोधितदुश्शीलानामपि प्रामाण्यप्रसङ्गादितिचेन्न, तपस्विनां महात्मनां शीलानि निदार्शनीकृत्य तत्साम्येन दुर्बलै रतापसैर्मानवैः तादृशशीलस्य परिग्रहीतुमशक्यत्वात्। तत्रार्थे मन्वादिवचनान्युदाह्रियन्ते—

धर्मव्यतिक्रमो दृष्टः महतां साहसं तथा।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरजोऽपरः॥
तेजोमयानि पूर्वेषां शरीराणीन्द्रियाणिच।
दोषैस्तेनोपलिप्यन्ते पद्मपत्रमिवाम्भसा॥

श्रुतिश्च— तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत एवंह्यस्य सर्वे पाप्मानः प्रदूयन्ते इति॥

बोधायनः— अनुष्ठितञ्च यद्देवैः मुनिभिर्यदनुष्ठितं।
नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्॥

इत्याद्यनेकवचनैः देवमुन्याद्यनुष्ठानसाम्येन लोकविरुद्धस्य

प्रत्यवायकरस्य मनुष्याद्यनुष्ठानस्य सर्वात्मना निषिद्धत्वात् । नन्वात्मविदां महात्मनां तेषां तादृशविरुद्धकर्मानुष्ठानेन पुण्यपापानुदयेन क्षतिविरहेऽपि श्रेष्ठैरन्तैराचरिते कर्मणि प्रायेण सामान्यस्य प्रवृत्त्यवश्यम्भावेन तादृशैरनुग्राह्यस्य लोकसंग्रहस्य भङ्गस्य दुष्परिहारतया कुतस्तैस्तथानुष्ठितमिति चेन्न, प्रबलतमस्य प्रारब्धकर्मणो दुर्निवारतया तद्वशेन तैस्तथानुष्ठितत्वात् । ननु किमिदं प्रारब्धं कर्म भोगात् निवारयितुं शक्यते नवा, नाद्यः पक्षः प्रारब्धं भोगतो नश्ये दित्याबालवृद्धं विदितचरस्य शास्त्रीयवचनस्य विरोधात् । न द्वितीयः प्रारब्धस्य प्रारब्धकर्मणा प्रवर्त्यमानस्य व्याध्यादेर्वा निवारणार्थे 'पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरौषधैर्दानैः जपहोमार्चनादिभिः ॥ इत्यादिना निर्दिष्टानामौषधादीनां लोकेतत्प्रवृत्तेश्च वैयर्थ्यात् , तस्य भोगंविनाऽप्रतीकार्यत्वश्रवणात् । इतिचेन्न, प्रारब्धस्य सर्वात्मना प्रतीकार्यत्वविरहेऽपि तद्गतस्य दार्ढ्यापरपर्यायस्य प्राबल्यस्य जपादिभिः प्रतीकार्यत्वात । अन्यथा आयुर्वेददीनां नैरर्थक्यप्रसङ्गात् । 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः..... उद्योगः खलु कर्ता इत्यादीनां पौरुषावश्यकताबोधकानां लोकशास्त्रसम्मतानां मुक्तीनां जाग्रतीनामपि प्रारब्धकर्मतुल्यं 'प्रारब्धं भोगतो नश्ये' दिति वचनमेकमवलम्ब्य वैदिके लौकिकेच कर्माणि उदासीनानां केषांचिदभिप्रायाः समालोचनाविधुरा धर्मविघटका अनर्थकारा जीवयात्रापरिपन्थिन श्चेत्यवगन्तव्यम् । नच तर्हि (प्रारब्धप्राबल्यस्य प्रतीकार्यत्वे) केनवा प्रकारेण प्राबल्यस्य तस्योपशान्तिरिति वाच्यम् , इह शरीरे स्वल्पभोगजननेन स्वप्नादिभोगजननेन वा तत्प्राबल्यस्य जपादिभि. परिक्षणितया अङ्गीकृतत्वात् , (अभिप्रायोऽयं माधवाचार्येण सूचितः पराशरस्मृतिव्याख्यायां नच तर्हि मुनिभिः तपोमहिम्ना तत्प्रा.

बल्यस्य निवारयितुं शक्यतया कुतस्तादृशं लोकगर्हितं कृतं कर्मे-ति वाच्यम्। फलान्यथाभावादर्शनेन तत्प्रारब्धप्राबल्यस्य तपोमाहि-म्नाप्यप्रतीकार्यत्वस्य स्वीकार्यत्वात्। तथाच तत्प्राबल्यं क्वचि-त्पर्याप्तजपादिकारणसामग्रीतो नश्यति क्वाचिन्ननश्यतीत्यपि फलानु-रोधादङ्गीकार्यं। जपादीनां पर्याप्तताच तत्तद्रोगानुसारेण शान्ति-विधायकतत्तच्छास्त्रानुसारेणावगन्तव्या। नच सर्वदा जपादिभिः व्याधिनाशाङ्गीकारे व्याधिफलस्य मरणस्य प्रसक्तिरेव नस्यादिति वाच्यं, अकालमरणप्रयोजकानां व्याधीना निवृत्तावेव जपादीनां कारणत्वाङ्गीकारात्, कालमरणस्यतु जन्यमात्रस्यालभ्यत्वात्। अ-थवा व्याधिनिवृत्तावेव जपादीनां कारणत्वस्याभिहितत्वात् मरणप्र-तिवन्धे तेषां कारणतया अभिहितत्वाच्च नानुपपत्तिः।

ननु कालानुगुण्येन धर्मशास्त्रस्य परिवर्तनकरणे कः प्रत्यवाय इतिचेन्न, सर्वज्ञानां मुनीनामेव तादृशाधिकारस्य धर्मशास्त्रे व्यव-स्थापितत्वेन अन्येषां तदधिकारस्य निषिद्धत्वात्। तथाच धर्मनि-र्णये श्रुतेरनुपलम्भे स्मृतिः द्वयोस्तयोरनुपलम्भे सम्प्रदायापरनाम सदा-चारः तेषां त्रयाणामनुपलम्भे परमधार्मिकस्य शील तेषां चतुर्णा मनुपलम्भे वैकल्पिके नूतने शास्त्रगोचरे वा विषये आत्मतुष्टिश्च प्रमाणीकार्या धर्मविदेति सिद्धं। अतः श्रुतिस्मृत्यादिनिरतैः स-दाचारसम्पन्नैः सुशीलैः सन्तुष्टात्मभिः सत्यदानदयाशौचादितत्परैः भगवद्भक्तैः द्विजन्मभिः सर्वैर्भवितव्यमिति धर्मशास्त्रस्य तात्पर्यमि-ति वेदितव्यं॥

स्मृत्यन्तरस्य मनुस्मृत्यादिविरोधे मनुस्मृतिरेव प्रबला "मन्वर्थ विपरीतातु या स्मृतिस्सा न शस्यते इति स्मृतेः "यद्वै किञ्च मनु-रवदत्तद्भेषजमिति श्रुतेश्च। नन्वेवं "कृतेतु मानवा धर्माः त्रेता-

र्या गौतमाः स्मृताः द्वापरे शङ्खलिखिताः, कलौ पाराशरा, स्मृताः, इति वचनबलेन मानववचनापेक्षया कलौ पाराशरवचनस्य प्राबल्यस्य अवगम्यमानतया कथं मानववचनस्य प्राबल्यसिद्धिः। "कलौ पाराशरा स्मृताः,, इति विशेषवचनानुसारेण पाराशरवचनस्यैव प्राबल्यस्य समुचितत्वादिति चेन्न, इष्टापत्तेः (पराशरवचनप्राबल्यस्येष्टत्वादित्यर्थः] नन्विदमसङ्गतं, स्मृत्यपेक्षया श्रुतेः प्राबल्यस्य सर्वसम्मतत्वेन "कलौ पाराशरा इति स्मृत्यपेक्षया "यद्वै किञ्चेति श्रुतेः,, प्राबल्येन प्रबलश्रुत्युक्तमानववचनापेक्षया पाराशरवचस्य प्राबल्यं दुर्निरूपमिति चेन्न, पाराशरमहिम्नोऽपि श्रुत्यभिमतत्वात्। नच कथं तस्य श्रुत्यभिमतत्वमिति वाच्यम्, पराशरपुत्रत्वेहतुना वेदव्यासमहिमाप्रशंसनद्वारा पराशरस्तुतिपरया "सहोवाच व्यासः पाराशर्य' इति श्रुत्या वाजसनेयशाखायां वंशब्राह्मणे वेदसम्प्रदायप्रवर्तकगुरुशिष्यपरम्पराप्रतिपादिकया 'निर्घृतकौशिकाद्घृतकौशिकः, पाराशर्यायणात् पाराशर्यायणः, पाराशर्यात्पाराशर्यः,, इति श्रुत्या च तन्माहिम्नो मन्वादिमहिमसाम्येन प्रतिपादितत्वात्। नच मनुपराशरयोः तन्माहिम्नोश्च साम्येन वेदप्रतिपादितत्वेपि "यद्वै किञ्च मनुरवदत्,, इति प्रत्यक्षश्रुत्या मानववचनप्रामाण्यस्यैव पाराशरवचनप्रामाण्यस्य प्रत्यक्षश्रुत्या अनभिहिततया मनुवचनसाम्येन पाराशरवचनस्य प्रामाण्यं दुर्ग्रहमेवेति वाच्यं, पाराशरवचनप्रामाण्यप्रतिपादकप्रत्यक्षश्रुतिविरहेपि श्रुतिप्रतिपादितपाराशरगुरुत्वस्य तद्वचनप्रामाण्यान्यथानुपपत्त्या वंशब्राह्मणीयश्रुतेः प्रत्यक्षश्रुतितुल्यतया अव्याहतत्वेन कलौ पाराशराः स्मृता इति विशेषवचनबलेनच मनुस्मृत्यपेक्षया पराशरस्मृतेरेव कलौ प्रबलत्वात्। ननु स्मृत्यन्तरीयविशेषवचनबलेन पराशरस्मृतेः मनुस्मृत्यपेक्षया प्राबल्यनिरूपणमुचितं स्यात् कलौ पाराशरा इति तदीयवचनानुसारेण तदीयवचन-

स्यैव प्राबल्यनिर्णयोऽनुचित इति चेन्न । द्वेषरागिषु तदीयवचना. नुसारेण तदीयवचनस्य प्रामाण्यनिरूपणस्यानुचितत्वेपि अद्वेषरागे ष्वविकत्थनेषु तदीयवचनानुसारेणापि तद्वचनस्य प्रामाण्यस्वीकारे क्षत्यभावात । किञ्च माधवाचार्येण (विद्यारण्यस्वामिना) "यद्वै किञ्चमनुरिति श्रुतेरर्थमनुवचनप्राशस्त्यपरार्थवादत्वस्य शङ्कितत्वेन वंशब्राह्मणे अर्थवादत्वशङ्काविरहेणच मनुवचनापेक्षया पाराशरवच. नस्य कलौ प्राबल्ये क्षत्यभावात । किञ्च "कलौ पाराशराः स्मृताः, इति वचनस्य धर्मसङ्कोचपरतयामनुवचनापेक्षया प्राबल्यविरोधौ नस्त इतिबहूनामभिप्रायः । प्रायेण स्मृतिकाराणां याज्ञवल्क्यादीनां श्रुतिप्र तिपादिततया साम्येन तदीयानां सर्वासां स्मृतीनां प्रामाण्यं निर्विवादमेव त्ववगन्तव्यं ॥

किमिदं धर्मशास्त्रं (स्मृतिपुराणेतिहासादि) गुरुमुखादध्येतव्यं आहोस्वित् स्वपाण्डितीमाहिम्ना साधनीयमिति शङ्कायां स्वपाण्डित्ये न साधने कुत्रचित्कदाचिद्धर्मे प्रमादः सम्भवेदित्याशयाना मुनयः वेदवद्धर्मशास्त्रमपि गुरुमुखादभ्यसनीयमित्याहुः । तत्र व्यासहारी- तौ ॥ श्लो॥ धर्मशास्त्रं सदा पाठ्यं ब्राह्मणैश्शुद्धमानसैः। वेदवत्प ठितव्यञ्च श्रोतव्यंच दिवानिशम् ॥ इति ॥ ननु वेदस्य गुरु. मुखात्पठनीयत्वे सिद्धे किल तद्वद्धर्मशास्त्रस्यापि गुरुमुखाधीनपाठ स्सिद्ध्यति तदेव न सम्भवतीतिचेन्न, 'स्वाध्यायोऽध्येतव्य इति श्रु. तेरेव गुरुमुखाद्वेदाध्ययनस्य कर्तव्यतायां प्रमाणत्वात् । नच त. च्छ्रुतेरपि कथं तादृशार्थबोधकत्वमिति वाच्यत, तच्छ्रुतेः मीमांस. कैः अध्ययनेन स्वाध्यायं भावयेत् (सम्पादयेत्] इत्यर्थस्य निर्णी तत्वात् । तत्र अध्ययनंच गुरुमुखोच्चारणानुचारणं [गुरुमुखो. च्चारणाधीनोच्चारणं) इति सर्वसम्प्रतिपन्नंहि अस्मिन्नर्थे वेदस्या. ध्ययनं सर्वं गुर्वध्ययनपूर्वकं वेदाध्ययनसाम्यात । अधुनाऽध्ययने

यथेति वचनञ्च प्रमाणम् । तथाच गुरुमन्तरा बुद्धिमतापि पु.
स्तकादिसाहाय्येन वेदो न सम्पाद्य इति सिद्ध्यति । अन्यथा अ.
परिहार्यः स्यात् प्रत्यवायः । नन्वनेन विधिवाक्येन किं वेदैकदे.
शस्याध्ययनं सिद्ध्यति आहोस्वित् कृत्स्नस्य वेदस्याध्ययनमितिचेन्न ।
"असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकव्यापक.
त्वं विधेयांशे भासतइति नियमानुसारेण अध्ययनरूपे विधेये उद्दे.
श्यतावच्छेदकस्वाध्यायत्वव्यापकत्वस्यांगीकार्यतया कृत्स्नवेदस्याध्यय.
नं सम्पादनीयमिति सिद्ध्यति । नच तर्हि किमर्थोयमर्थवादानां
निरर्थानामध्ययनायास इति वाच्यम्, तेषामपि स्तुतिनिन्दान्यतर.
बोधनद्वारा विधेयप्राशस्त्यबोधकतया विधिकार्यैकवाक्यतापन्नत्वेन
निरर्थत्वाभावेन तदध्ययनस्याप्यपरिहार्यत्वात् । किञ्च प्रभुसम्मि'
तायाः "स्वाध्यायोऽध्येतव्य इति विधायकश्रुतेरेव कृत्स्नवेदस्याध्य-
यनस्य कर्तव्यतायां नियामकत्वाच्च । सङ्कोचे प्रमाणाभावात् ।
श्रुतिविहितमर्थं कोवांऽन्यथयितुं शक्नोति? एवञ्च सर्वो वेदः
गुरुमुखादेव संसाधनायः नान्ययत्नेन सम्पाद्य इति पर्यवस्यति ॥

आर्याः! पाठकमहाशयाः! क्षम्यतामयमपराधः यत् न्याय.
शास्त्रे प्रसक्तानुप्रसक्त्या धर्मशास्त्रीयोऽपि विचारस्संग्रहणादृतः ।
अपिच सर्वेषां शास्त्राणां मोक्षे तदौपयिके कर्मानुष्ठानादौ किलो.
पयोगः; धर्मशास्त्रपरिज्ञानमन्तरा नहि कर्मानुष्ठातुं शक्यम् । त.
द्धि परिज्ञानं श्रुत्यादीनां प्राबल्यदौर्बल्यपरिज्ञानमन्तरेण दुष्प्रापमि.
ति प्रसङ्गेन विषय एतावान् विचारितः । अतो नानौचित्यं स.
म्भावयन्तु निरसूयाः कृपालवो गुणगृह्यत्र इति शिवम् ॥

अन्याच काचन विज्ञप्तिः— प्रकृत्या सप्रमादा हि मानुषा
णां मतिः. तत्रापि श्रूयते "प्रमादो धीमतामपि,, इति लोकोक्ति.
रपि स्थिते चैवं किमु वक्तव्यमविशेषविदो मादृशस्य सामान्यस्या.

सहायस्य विद्वच्चरणपरमाणोः सप्रमादा स्यान्मनीषेति "मन्दः क वियशः प्रार्थी गमिष्याम्यपहास्यताम्, इति कालिदासीयं वचनं मय्यन्वर्थमिति विज्ञानतापि भगवत्सङ्कल्पप्रेरितेन मया यथामति प्रणीते ग्रन्थे विद्यमानान्यज्ञानविलसितानि सप्रसादं स्वयं परिशोध्य गुणानत्रत्यान् मनसि कृत्य कृतार्थयन्तु मां निरसूय स्सहृदया. स्सदया स्सुधिय इति सांजलिबन्धमभ्यर्थये भूयो भूय इतिशम् ॥

श्रीमत्त्रिलिङ्ग (श्रीमदान्ध्र) देशविराजमानगुण्टूरुमण्डलान्तर्वर्ति कृष्णातटिनीसमीपवर्ति वेमूरुग्रामवास्तव्येन न्यायवेदान्ततन्त्रसमुपलब्धनिरवधिकप्रज्ञाविशेषवेमूर्युपनामकरामब्रह्मबुधेन्द्रगुरुवरपदपङ्कजसेवासमधिगतविज्ञानेन कुरुगण्ट्युपनामकसूर्यनारायणशर्मद्वितीयतनयेन कन्नमाम्बागर्भसम्भूतेन वेङ्कटरामशास्त्रिणः कनिष्ठसोदरेण नरसिंहावधानिनो ज्येष्ठसोदरेण श्रीसुब्बलक्ष्मी राज्यलक्ष्मी कनकदुर्गा शारदानामकपुत्रीचतुष्टयसमन्वितेन श्रीवेङ्कटेश्वरशास्त्रिणस्तातेन श्रीसुब्बलक्ष्मीपरिग्रहेण तर्कसंग्रहसर्वस्व दीपिकासर्वस्व पञ्चलक्षणीसर्वस्वकारेण यजुश्शाखाध्यायिना हरितसगोत्रेण कुरुगण्टि श्रीरामशास्त्रिणा प्रणीतस्य भगवदर्पितस्य पारिभाषिकपदार्थसंग्रहस्य द्वितीयमुद्रणं समाप्तिमगमत ॥

सर्वं श्रीहरि हर गणपति दक्षिणामूर्ति देवतार्पणमस्तु ॥



---



सूचना — अस्मिन् ग्रन्थे यत्र यत्र "श्रुति," इति मुद्रितं तत्र तत्र "श्रुति," इति विज्ञेयम् ॥

# शुद्धाशुद्धपत्रिका ॥



, (काम) " (कोटेषन्) — (डाष्) ।

एवंविधरेखाणां तत्र तत्र स्थानेष्वप्रवेश: अस्थानेषु प्रवेशश्च दृश्यते । अत: सदया: पाठकास्समुचितस्थानेषु रेखास्तास्संयोजयन्तु ॥

तकारांतप्रकृतिकत्वप्रत्ययस्थलेषु तकारद्वित्वं ग्राह्यम्; यथा सत्वं रूपवत्वमित्यादौ सत्त्वं रूपवत्त्वमिति ग्राह्यम् ॥

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | पाण्डुर: | पाण्डर: |
| | | श्रृति | श्रुति |
| | | अर्ध | अर्थ |
| २३ | १९ | षष्ठ्यर्थो | षष्ठ्यर्था |
| २३ | २० | जीवरूप | जीवरूपे |
| २६ | १४ | यत्सत्त्वे यदनुत्पत्तिरित्यस्य पूर्वं "अन्वयव्यतिरेकव्यभिचारद्वय"मिति पूरणीयम् ॥ | |
| २७ | २१ | कत्वाभ्युप | कत्वानभ्युप |
| २८ | २१ | माननां | मानानां |
| ३० | ७ | साध्यव्याप | साध्याव्याप |
| ३१ | ९ | व्यतिरेकी | व्यतिरेकि |
| ३१ | ९ | लान्वयी | लान्वयि |
| ३३ | १९ | उदासीनपदात्पूर्वं | "साधनावच्छिन्नसाध्यव्यापक." इति पठनीयं ॥ |
| ३६ | ९ | जीवात्मन: | जीवात्मान: |
| ३७ | ५ | कल्पनान्यय्या | कल्पनान्याय्या |
| ३८ | ७ | वद्वृत्तित्व | वद्वृत्तित्व |
| ३८ | १२ | समभिव्या | समव्या |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३८ | २० | ज्ञानाननु | ज्ञानानु |
| ३९ | ६ | स्वसमा | स्वसामा |
| ४० | १५ | क्षणव्यत्र | क्षणाव्यत्र |
| ४२ | ४ | च्छेदकत्व | च्छेदकतावत्त्व |
| ४३ | १९ | नादृश | तादृश |
| ४७ | १५ | आधारपदात्पूर्वं विषयविषयिणोरिति पठनीयम् | |
| ४९ | १८ | वद्वृत्तित्वा | वदवृत्तित्वा |
| ५० | १७ | घटवृत्ति | घटावृत्ति |
| ६० | २० | शतृद्वेषा | शत्रुद्वेषा |
| ६२ | २० | ज्ञानाश्रयत्वाभाव | ज्ञानाभावाश्रयत्व |
| ६२ | २२ | त्रिषयकज्ञान | विषयकाज्ञान |
| ६३ | १५ | रोक्ति | रोक्त |
| ६४ | १२ | कारणप्रयो | कारणयो |
| ६४ | १९ | शक्यात्म | शक्त्यात्म |
| ६६ | १८ | नक्षणा | लक्षणा |
| ६७ | १७ | भांती | भवती |
| ७६ | २५ | वाचि | वाचि |
| ७८ | ९ | स्पर्शा | स्पर्श |
| ८२ | ६६ | रनु | रणु |
| ८७ | १४ | सविषयका | सविषयिका |
| ८७ | २१ | सुख | मुख |
| ८७ | २३ | गृहीतुं | ग्रहीतुं |
| ८८ | ७ | नुमानेव | नुमानेन |
| ८८ | १५ | स्योत्प्रेक्ष | स्योत्क्षेप |

# शुद्धाशुद्धपत्रिका ॥

| पृष्ठ… | पंक्तौ… | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ९३ | १६ | स्नेहत्वस्या | स्नेहत्वस्य |
| ९४ | ९ | निष्टैव | निष्ठवै |
| ९५ | १ | प्रत्यक्ष | प्रत्यक्षा |
| ९६ | ६ | हारासम्भवे | हारसम्भवे |
| ९६ | १० | पृथक्त्व | पृथक्त्वत्व |
| ९८ | ६ | भावतद् | भावस्यापि तद् |
| ९८ | १० | योगिनोऽयो | योगिनोयो |
| १०७ | ८ | नेति | नाति |
| … | १२ | न्नत्ववृत्तिमान् | न्नत्व) वृत्तिमान् |
| १०६ | २ | चत्वार | चत्वरा |
| १०७ | १७ | सौकर्यायं | सौकर्यार्थं |
| १०८ | २३ | वृत्तीसंयो | वृत्तिसंयो |
| १०९ | ७ | वच्छिन्नत्व | वच्छिन्नस्य |
| १०९ | १४ | तीयमपि | तयमपि |
| ११० | ११ | विशेष्यविशेष | विशेष्येविशेष |
| … | १४ | सर्पांशे | सर्वांशे |
| १२० | ११ | मन्वय | मभेद |
| १२१ | १५ | साकांक्षा | साकांक्ष |
| … | १६; १७ | निराकांक्षा | निराकांक्ष |
| १२३ | ९ | तयो | तया |
| १२४ | ७ | नात्रत्वा | नात्रत्या |
| १२८ | १७ | वोयूनां | वायूनां |
| १३० | ८ | ‘किंचिद्ज्ञात्वादो’’ | इदमनावश्यकम् |
| १३० | ९ | पदार्थभेद | पदार्थभेद |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३८ | २० | ज्ञानानन्तु | ज्ञानानु |
| ३९ | ६ | स्वसमा | स्वसामा |
| ४० | १५ | क्षणव्यत्र | क्षणाव्यत्र |
| ४२ | ४ | च्छेदकत्व | च्छेदकतावत्व |
| ४३ | १९ | नादृश | तादृश |
| ४७ | १५ | आधारपदात्पूर्वं विषयविषयिणोरिति पठनीयम् | |
| ४९ | १८ | वद्वृत्तित्वा | वद्वृत्तित्वा |
| ६० | १७ | घटवृत्ति | घटावृत्ति |
| ६० | २० | शतृद्वेषा | शत्रुद्वेषा |
| ६२ | २० | ज्ञानाश्रयत्वाभाव | ज्ञानाभावाश्रयत्व |
| ६२ | २२ | त्रिषयकज्ञान | विषयकाज्ञान |
| ६३ | १५ | रोक्ति | रोक्त |
| ६४ | १२ | कारणप्रयो | कारणयो |
| ६४ | १९ | शक्यात्म | शक्त्यात्म |
| ६६ | १८ | नक्षणा | लक्षणा |
| ६७ | १७ | भंती | भवती |
| ७६ | २५ | वाचि | वाचि |
| ७८ | ९ | स्पर्शा | स्पर्श |
| ८२ | ६६ | रनु | रणु |
| ८७ | १४ | सविषयका | सविषयिका |
| ८७ | २१ | सुख | मुख |
| ८७ | २३ | गृहीतुं | ग्रहीतुं |
| ८८ | ७ | नुमानेव | नुमानेन |
| ८८ | १५ | स्योत्प्रेक्ष | स्योत्क्षेप |

# शुद्धाशुद्धपत्रिका ॥

| पृष्ठ··· | पङ्क्तौ··· | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९३ | १६ | स्नेहत्वस्या | स्नेहत्वस्य |
| ९४ | ९ | निष्टैव | निष्ठैव |
| ९५ | १ | प्रत्यक्ष | प्रत्यक्षा |
| ९६ | ६ | हारासम्भवे | हारसम्भवे |
| ९६ | १० | पृथक्त्व | पृथक्त्वत्व |
| ९८ | ६ | भावतद् | भावस्यापि तद् |
| ९८ | १० | योगिनोऽयो | योगिनोयो |
| १०७ | ८ | नेति | नाति |
| ... | १२ | न्नत्ववृत्तिमान् | न्नत्व) वृत्तिमान् |
| १०६ | २ | चत्वार | चत्वरा |
| १०७ | १७ | सौकर्यायं | सौकर्यार्थं |
| १०८ | २३ | वृत्तीसंयो | वृत्तिसंयो |
| १०९ | ७ | वच्छिन्नत्व | वच्छिन्नस्य |
| १०९ | १४ | तीयमपि | तयमपि |
| ११० | ११ | विशेष्यविशेष | विशेष्येविशेष |
| ... | १४ | सर्पांशे | सर्वांशे |
| १२० | ११ | मन्वय | मभेद |
| १२१ | १५ | साकांक्षा | साकांक्ष |
| ... | १६; १७ | निराकांक्षा | निराकांक्ष |
| १२३ | ९ | तयो | तया |
| १२४ | ७ | नात्रत्वा | नात्रत्या |
| १२८ | १७ | वोयूनां | वायूनां |
| १३० | ८ | 'किंचिदूज्ञात्वादौ'' | इदमनावश्यकम |
| १३० | ९ | पदार्थभेद | पदार्थाभेद |

| पृष्टे… | पंक्तौ… | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३२ | १६ | दरकुल | दरनकुल |
| १३४ | १९,१७ | त्रैविध्य | त्रैविद्य |
| १३५ | १० | पाप | महापाप |
| १३७ | १० | ऊँहा | ऊह |
| १३८ | २ | निर्णत्र | निर्णय |
| १३९ | ११ | कर्ता | कर्तव्यः |
| १३९ | १७ | तानांमुक्ती | तानामुक्ती |
| … | २० | अनर्थकारा | अनर्थकरा |
| १४० | ९ | स्यालभ्य | स्यालंघ्य |
| १४० | ११ | अभिहित | अनभिहित |
| १४० | १७ | शास्त्रगोचरे | शास्त्रागोचरे |
| … | २३ | शश्यते | शस्यते |
| १४१ | ११ | महिमा | महिम |
| १४२ | २३ | नुचारणं | नूच्चारणं |
| १४२ | २५ | साम्यात् | सामान्यात् |
| १४३ | १० | कार्यैक | वाक्यैक |
| १४४ | ५ | निरसूय | निरसूया |

पञ्चाशत्तम (५०) पुटोत्तरपुटे प्रमादात् त्रिपंचाशत् (५३) संख्या निहिता अतो न तत्र ग्रन्थपातशङ्का कार्या ॥

सप्तसप्ततितम (७७) पुटोत्तरपुटे अष्टसप्ततितमपुटोत्तरपुटे च प्रमादात् नकापि संख्या निहिता, अतो नतत्रापि ग्रन्थपातादिशङ्का कार्या, सर्वत्रापि ग्रन्थः अविच्छिन्नक्रमएवेति ज्ञेयम् ॥



